THE

# SATYA HARIS'CHANDRA NÂṬAKA

OF

## RÂMACHANDRA.

EDITED BY

BHÂSKAR RÂMCHANDRA ÂRTE, M. A.

AND

SHANKAR VISHNU PURÂṆIK, B. A.

Third Edition.



PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

BOMBAY.

1923.

*Price 8 Annas.*

# सत्यहरिश्चंद्रनाटकम् ।

प्रबंधशतकर्तृमहाकविरामचंद्रप्रणीतम् ।

आर्तेकुलोत्पन्नरामचंद्रसूनुना भास्करेण
पौराणिककुलोत्पन्नविष्णुशर्मसुतेन शंकरेण च
संस्कृतम् ।

बाकेइत्युपाह्वगङ्गाधरभट्टसुतमहादेवशर्मणा संस्कृता
(तृतीयावृत्तिः)

तच्च
मुम्बय्यां
पांडुरंग जावजी इत्यनेन स्वीये निर्णयसागराख्यमुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

शाकः १८४४ खिस्ताब्दः १९२२

मूल्यं ८ आणकाः ।

## पात्राणि।

| | | |
|---|---|---|
| हरिश्चंद्रः | .... | अयोध्यापतिः |
| सुतारा | .... | तत्पत्नी |
| रोहिताश्वः | .... | तत्सुतः |
| वसुभूतिः | .... | तदमात्यः |
| कुंतलकपिंजलौ | .... | तत्परिचारकौ |
| चंद्रशेखरः | .... | काशीपतिः |
| सत्यवसुः | .... | तदमात्यः |
| सुनंदसिंहलकौ | .... | तत्परिचारकौ |
| चंद्रचूडकुंदप्रभौ | .... | देवौ |
| कुलपतिः | .... | आश्रमपतिः |
| निकृतिः | .... | तत्पत्नी |
| वंचना | .... | तत्सुता |
| अंगारमुखः, वैखानसः, कौटिल्यः | .... | तापसाः |
| कालदंडः | .... | निषादपतिः |
| वज्रहृदयः | .... | कश्चिद्ब्राह्मणः |
| वृद्धा, वामनाचेटी, पत्रलेखा, लंबस्तनी, विद्याधरी | .... | इतराः |
| चित्रांगदः, पिशाचः, पुरुषः, प्रतीहारः ( मंजरकनामा ), मांत्रिकः | | इतरे |

# सत्यहरिश्चन्द्रनाटकम्।

ॐ नमः सर्वज्ञाय।

देवाय विश्ववंद्याय नाभेयाय नमोनमः।
सर्वोऽप्येष मनुष्याणां यदुपज्ञं क्रियाक्रमः॥ १॥

(नांद्यंते सूत्रधारः) भो भो स्फुरन्निःशेषकलाकलापसंपदः सभासदः किमपि वो विज्ञापयामि।

अधीती सर्वभाषासु गृहीती दशरूपके।
आम्नाती रसकाव्येषु प्रबंधान् द्रष्टुमर्हति॥ २॥

ततो यदि यूयं यथोदितगुणग्रामाभिरामात्मानस्तदिदानीं सभ्यभूयमनुभवितुमर्हथ। (आकाशे)

किमादिशत यथोदितगुणग्रामाभिरामा एव वयमास्महे। किंतु परमरसनिष्यंदसुंदरः कोऽपि प्रबंधोऽभिनीयतामिति। (विहस्य) सरसतायां किमुच्यते प्रबंधस्य। यतः—

व्युत्पत्तिर्मुखमेव नाटकगुणव्यासे तु किं वर्ण्यते
सौरभ्यप्रसवा नवा भणितिरप्यस्त्येव काचित् कचित्।
यं प्राणान् दशरूपकस्य सकरोत्क्षेपं समाचक्षते
साहित्योपनिषद्विदः स तु रसो रामस्य वाचां परम्॥ ३॥

किं च।

प्रबंधा इक्षुवत्प्रायो हीयमानरसाः क्रमात्।
कृतिस्तु रामचंद्रस्य सर्वा स्वादुः पुरः पुरः॥ ४॥

अपि च। कोऽप्येष वः परमहर्षोत्सवो वर्तते। तदवधीयतां क्षणमेकम्।

सूक्तयो रामचंद्रस्य वसंतः कलगीतयः।
स्वातंत्र्यमिष्टयोगश्च पंचैते हर्षवृष्टयः॥ ५॥

(प्रविश्य संभ्रांतो नटः) भाव, स युष्मत्प्रतिस्पर्धी साहसिकनामा कुशीलवः प्रसह्य भवतो निषिध्य स्वाभिप्रेतं प्रबंधमभिनेष्यति।

**सूत्रधारः**—(ससंरंभम्) साहसिकः स्वाभिप्रेतं प्रबंधमभिनेष्यति।

**नटः**— अथ किम् ।

**सूत्रधारः**—मारिष अन्यद्विचिंतितमन्यदापतितम् । श्रीसिद्धहेमाभिधानशब्दानुशासनवेधसः श्रीमदाचार्यहेमचंद्रस्य शिष्येण रामचंद्रेण विरचितं सत्यहरिश्चंद्राभिधानमादिरूपकमभिनीय सभाजनमनुरंजयिष्याम इति किलास्माकं मनोरथः । यदि वा खलु कृत्वा प्रतिभयम् । कतमो नाम साहसिकः प्रसह्य नः प्रतिषिध्य स्वाभिप्रेतं प्रबंधमभिनेतुं सोद्यमः एते वयं तमपकर्ष्य स्वप्रतिज्ञातमाध्यास्यामः । यतः—

सत्त्वैकतानवृत्तीनां प्रतिज्ञातार्थकारिणाम् ।
प्रभविष्णुर्न देवोऽपि किं पुनः प्राकृतो जनः ॥ ६ ॥

(नेपथ्ये) हृदयंगममुक्तवानसि ।

**सूत्रधारः**—कथमयं हरिश्चंद्रभूमिकावाही नर्तकः शब्दायते । तदेहि ।

**मारिषः**—करणीयांतरमनुतिष्ठामः ।

(इति निष्क्रांतौ । प्रस्तावना ।)

---

## प्रथमोऽङ्कः ।

(ततः प्रविशति कुंतलकपिंजलाभ्यां सह तुरगाधिरूढो राजा ।)

**राजा**—सत्त्वैकतानवृत्तीनामिति (विमृश्य) कुंतल, नियतं वयमद्य शक्रावतारतरुविसरबाधाविधायिनं महावराहं व्यापादयिष्यामः ।

**कपिंजलः**—यदैव तोमरासारं साकेतपतिरमुंचत्तदैव वराहो व्यापादितः । किंतु क्वचिदपि सरयूगह्वरे पतितोऽपि नो लक्ष्यते ।

**राजा**—(समंततो निरूप्य । अवलोक्य) अहो सरसतरुविसराणां साकेतपरिसराणां वरिमा । तथा ह्येते—

क्वचित् क्रीडाक्रोडप्रतिभयपरित्रस्तपृथुकाः
क्वचित् क्रीडाशैलोपतटतरुविश्रांतपथिकाः ।
क्वचिद्वारीयंत्रध्वनिरभसनृत्यच्छिखिगणाः
क्वचिद्गोपीगानश्रवणनिभृतोत्कर्णहरिणाः ॥ ७ ॥

कुंतलः—वसंतावतारव्यतिषंगरंगत्परभागस्य जगतः श्रियमवधारयतु देवः ।

परभृतवधूगीतस्फीतश्रियो वनशाखिनः
प्रतिदिशविशन्मल्लीवल्लीरजस्तरलं नभः ।
ककुभि ककुभि स्मेराक्षीणां विसर्पति चर्चरी
प्रतितरुतलं क्रीडक्षांता लसंति विलासिनः ॥ ८ ॥

राजा—कियति दूरे वयमागताः ।

कपिंजलः—देव, सुदूरमागता वयं । किं न पश्यति देवः पुरः प्रसर्पंतीमिक्ष्वाकुवंशालवालस्य साकेतस्य सारिणीं भगवतीं सरयूम् ।

राजा—(विलोक्य)

उपतटतरुच्छायाधूम्रं क्वचित्क्वचिदंगना-
घुसृणकपिशं हंसश्रेणीविगाहसितं क्वचित् ।
क्वचिदपि तरत्कोकद्वंद्वप्रभाशबलं क्वचित्
कुवलयदलश्यामं धत्ते श्रियं सरयूजलम् ॥ ९ ॥

कपिंजलः—देव, पश्य पश्य ।

सांद्रच्छायाजनिततमसः सारसैः शीकरौघैः
स्निग्धस्कंधा विदधति मुदं कस्य नामी वनांताः ।
येषां भूमौ पवनविचलत्पत्रमार्गप्रविष्टा
भानोर्भासः कनकतिलकश्रेणिलक्ष्मीं वहंति ॥ १० ॥

राजा—(विश्रम्य) कुंतल ।

जंबालजालजटिलासु सरित्तटीषु
मुह्येत्क्वचित्तुरग एष सुशिक्षितोऽपि ।
तस्माद्व्रजामि सरयूतटमुत्तरेण
वाचंयमांचिततपाश्रममीक्षमाणः ॥ ११ ॥

कुंतलः—यदादिशति देवः ।

(इति यथोक्तं कृत्वा)

राजा—(अग्रतो विलोक्य) कपिंजल, विलोकय मृगयाकुतूहलाकुलितचेतोभिरस्माभिः कियच्चिरं लक्ष्यमतिहृतम् ।

कपिंजलः—(परिक्रम्य) देव, अयं स महावराहः प्रहारपतितस्तिष्ठति ।

**राजा**—(विलोक्य सकौतुकम्)

निशिततरशरालीदक्षिणेर्मा प्रवृद्ध-
प्रसररुधिरधाराचित्रगात्रो वराहः ।
स्मरयति सुरचापावाप्तवर्धिष्णुकांते-
रविरलजलमैत्रीमेदुरांभोधरस्य ॥ १२ ॥

अपि च । यथेयमाकृतिरतैरश्ची तथा व्यक्तममुना दिव्येन पोत्रिणा भाव्यम् ।

**कपिंजलः**—अपरश्चायं द्वीपी प्रतिहतोऽस्ति ।

**राजा**—अपरं पुनरिदं किम् ।

**कपिंजलः**—(विलोक्य । सविचिकित्सम्) देव, इदमज्ञातमेवास्तु ।

**राजा**—तथापि किम् ।

**कपिंजलः**—किममुना ज्ञातेन । अतिकालो भवति । निवर्ततां सौधाय देवः ।

**राजा**—(स्वयमुपसृत्य सविचिकित्सम्) कथमियमस्मन्नाराचपातविनिर्लुठितगर्भा वराकी हरिणी । अहहाकृत्याचरणम् ।

कोऽयं न्यायो यदपरिचिताशेषशस्त्रोऽपि यंत्रै-
धृत्वा धृत्वा पशुरशरणो हन्यते कांदिशीकः ।
हित्वा धर्म्यं पथमिह भुजादर्पकंडूकरालाः
क्षोणीपालास्तदपि मृगयाकौतुकान्यावहंति ॥ १३ ॥

**कुंतलः**—कृतमिदानीं मृगयाकौतुकेन । यावत्पाश्चात्यं सैन्यं संनिधीयते तावदेतस्य सहकारस्य तले तुरगादवतीर्य तिष्ठामः ।

**राजा**—(तुरगादवतरणं नाटयति) पुनर्विमृश्य । कपिंजल, पुरो गत्वा विलोकय आश्रमः कियति दूरे ।

(यदादिशति देव इत्यभिधाय कपिंजलो निष्क्रांतः)

**राजा**—(सखेदम्)

धिङ्मां भ्रूणविघातिनं सकलुषं धिग् जीवितं मेऽखिलं
क्षोणीलोककरोपतापजनिता धिग् धिङ् ममैताः श्रियः ।
पुण्यास्ते करुणामृतार्द्रमनसो ये नाम वाचंयमा
हस्तारोपितशर्मणि प्रतिकलं वृत्ताः शुभे कर्मणि ॥ १४ ॥

कुंतल वयमिदानीं सर्वस्वपरित्यागमीहामहे ।

**कपिंजलः**—(प्रविश्य) प्रत्यासन्नं पश्य ।

**राजा**—किं सर्वस्वपरित्यागम् ।

**कपिंजलः**—न हि, मुनीनामाश्रमम् ।

(सर्वे आश्रमाभिमुखं परिक्रामंति)

**राजा**—(विलोक्य सहर्षम्)

विश्रंभांतिकचारिबालहरिणाः शाखाशिखालंबित-
प्रत्यग्राहृतदर्भवल्कसमिधो नीवारपुंजीजुषः ।
धूम्याश्यामलहोममंदिरभुवः कन्याजनक्रीडन-
न्यस्तांभस्तरलालवालबहलच्छायद्रुमा आश्रमाः ॥ १५ ॥

**कपिंजलः**—देव, अयं कुलपतिः । इमे तपस्विनः ।

(ततः प्रविशति कुलपतिः अंगारमुखप्रभृतयश्च तापसाः)

**कुलपतिः**—(सरोषमिव)

मर्त्यः कोऽपि समस्ति मांसनयनो नद्धांगभूर्धातुभिः
सत्त्वं तस्य तु देवताभिरपि चाचाल्यं किमप्यद्भुतम् ।
अश्रद्धेयमिदं सुधर्मणि सभापीच्ये ब्रुवाणः स्वयं
गीर्वाणाधिपतिर्न कस्य विदधे सक्रोधबोधं मनः ॥ १६ ॥

**अंगारमुखः**—

सर्वत्रोक्तिश्च युक्तिश्च वस्तुतत्त्वानपेक्षिणी ।
प्राणाः प्रभुत्वसंपत्तेः प्रथमे खलु विश्रुताः ॥ १७ ॥

ततः कोऽर्थं मघवतः स्वैरालापेषु भवतां संरंभः ।

**कुलपतिः**—किमपरमुच्यते । एष भगवतो मघवतः फल्गुतां नयामि वल्गितम् ।

**कुंतलः**—(उपसृत्य) भगवन्, अयोध्याधिपत्तिः प्रणमति ।

**कुलपतिः**—(सरभसम्) स्वस्ति महाराजाय । कोऽत्र भोः पाद्यं पाद्यमर्घोऽर्घः । अये वैखानस, आसनमासनमिक्ष्वाकुवंशावचूडाय महाराजाय ।

(प्रविश्य वैखनासः कुशासनमर्पयति । राजा प्रणम्योपविशति ।)

**कुलपतिः**—त्रिशंकुनंदन ।

राजन्वती वसुमती विशदं मनस्ते
कीर्तिः कलंकविकला प्रबलः प्रतापः ।
वर्णाश्रमश्रमनिरोधविधानशिक्षा-
दीक्षाविशालकुशला निखिलापि वृत्तिः ॥ १८ ॥

**राजा**—सर्वमस्ति नस्तपोभृतां प्रसादेन । (पुनः सविनयम्) भगवन् ।

ज्ञानध्यानतपांसि संयमभृतो निर्विघ्नमातन्वते
निष्प्रत्यूहफलप्रसूनसुभगाः कन्यावसिक्ता द्रुमाः ।
हस्तन्यस्तपयःसमित्कुशहृतो निर्व्याधबाधा मृगाः
कच्चिद्वः प्रतिभू शिवस्य परमे ब्रह्मण्यचाल्यो लयः ॥ १९ ॥

**कुलपतिः**—भरतकुलनभस्तलशशांक, भवति भूतधात्रीं प्रशासति कुतो नामाश्रमाणामसमंजसम् ।

(नेपथ्ये कलकलः) अकृत्याचरणम् अकृत्याचरणम्, अब्रह्मण्यम् अब्रह्मण्यम् ।

**कुलपतिः**—(ससंरंभम्) अये वैखानस, गत्वा जानीहि किंनिमित्तोऽयं तपस्विनामार्तो नादः । (पुनरपवार्य कर्णे) एवमेव ।

**वैखानसः**—जं[1] आणवेइ कुलवई । (इत्यभिधाय निष्क्रांतः)

**राजा**—कुंतल, पश्य पश्य ।

शास्त्रेषु विस्मृतवतां जरतां यतीना-
मर्थं पदानि च शुकाः स्मरयंति भूयः ।
एते च वृद्धकपयस्तिलतंदुलादि
होमोपयोगि यतिनामुपढौकयंति ॥ २० ॥

(नेपथ्ये । सकरुणम्) अंब[2], जइ एसा मे हरिणी एइणा सरप्पहारेण विवध्येस्सइ ता हं अणसणं करिस्सं ।

**कुलपतिः**—कथमियमस्मत्पुत्री वंचना प्रायोपवेशनमभिलषति । अंगारमुख किमिदम् ।

**अंगारमुखः**—अहं न जानामि ।

---

१ यदाज्ञापयति कुलपतिः. २ अंब, यद्येषा मे हरिण्येतेन शरप्रहारेण विवधिष्यते तदहं अनशनं करिष्यामि.

(नेपथ्ये) वत्से[1], जइ तुमं अणसणं करिस्सइ ता अहंपि करिस्सं ।

**कुलपतिः**—(ससंभ्रमम् ।) इयमस्मद्धर्मचारिणी निकृतिर्वत्साम-नुसरति । अंगारमुख द्वे अप्यत्र प्रेषय ।

( अंगारमुखः सत्वरं निष्क्रांतः । )

( ततः प्रविशतस्तापस्यौ । )

**कुलपतिः**—वत्से, किं विषादनिषादपरवशा दृश्यसे ।

**वंचना**—(सबाष्पम्) जाणाहि[2] ताद ।

**कुलपतिः**—वत्से, किमहं जानामि ।

**वंचना**—(रोदिति)

**कुलपतिः**—(ससंभ्रमम्) कथय वत्से, किमहं जानामि ।

**वंचना**—अत्थि[3] मे कीलाहारिणी एवं जाणाइ ताउ ।

**कुलपतिः**—या किल बाल्यादारभ्य स्वहस्तदत्तनीवारकवलैः प्रवृद्धिं नीता । ततः किं तस्याः ।

(वंचना उच्चैःस्वरं रोदिति)

**अंगारमुखः**—(प्रविश्य संभ्रांतः)

भूरराजन्वती सेयमब्रह्मण्यमहो महत् ।
मृगयाऽव्याकुलैः पापैर्गर्भिणी हरिणी हता ॥ २१ ॥

**कुलपतिः**—(सरोषमिव)

राजन्निक्ष्वाकुवंशक्षितिपतितिलक ध्यानविध्वंसकारी
कौतस्त्यस्तापसानामयमतनुरिहाकस्मिकः शोकशंकुः ।
स्फीतन्याये भवत्यप्यवनितलपतौ यद्यराजन्वती भूः
श्रेयोविश्रामयष्टिस्तदियमुपहता धर्मकर्मप्रवृत्तिः ॥ २२ ॥

(राजा व्रीडया दिक्षु चक्षुषी निक्षिपति)

**वंचना**—ताय[4], अहं अणसणं करिस्सं ।

**निकृतिः**—अहमपि ।

**कुलपतिः**—(सरोषम्)

---

१ वत्से, यदि त्वमनशनं करिष्यसि तदाऽहमपि करिष्यामि. २ जानासि तात. ३ अस्ति मे क्रीडाहरिणी एवं जानाति तातः. ४ तात,अहमनशनं करिष्यामि.

ज्ञात्वा कुतोऽपि ननु मध्यमलोकपाल
तं शाधि साधुजनबाधकरं श्वपाकम् ।
प्रत्यर्थिनः शमवतां रहितायुधानां
न्यायार्थिभिर्नृपतिभिः खलु शासनीयाः ॥ २३ ॥

**राजा**—(प्रणम्य सविषादम्)

परेषां दंडमाधातुमहमन्यायिनामलम् ।
न पुनः स्वात्मनो दूरशर्मणः पापकर्मणः ॥ २४ ॥

**कुलपतिः**—(सरोषं ससंभ्रमम्) किमुक्तं स्यान्मया व्यापादितेति ।

( राजा प्रणम्याधोमुखस्तिष्ठति )

**कुलपतिः**—(वल्कलेन मुखं पिधायोच्चैःस्वरम्)

आः पाप चापशरधी नियतं दधासि
ध्यानैकतानमनसः शमिनो निहंतुम् ।
युष्मादृशाः प्रतिनृपप्रहृतौ वराकाः
संग्रामधामनि कुतः प्रभविष्णवः स्युः ॥ २५ ॥

**राजा**—(सविनयं प्रणम्य) भगवन् , प्रसीद प्रसीद । क्षमस्व त्वमेकमपराधम् ।

**कुलपतिः**—अरे भरतकुलपांसन, त्रिशंकुयशश्चंद्रमसः कलंक, अदृश्यमुख, अस्पर्श,

स्त्रीभ्रूणघातगुरुपातकपंकिलास्य
मेध्याद्व्रज व्रज इतो द्रुतमाश्रमान्नः ।
युष्मादृशामकरुणैकशिरोमणीनां
सर्वंसहापि विरमत्यनुषंगपापात् ॥ २६ ॥

**राजा**—(सविनयम्)

इत्थं गते कथय किं करवाणि सोऽह-
मुद्भिन्नगर्भहरिणीहननश्वपाकः ।
धात्रीं त्यजामि विषमव्रतमाचरामि
किंवा विशामि रुचिलीढदिशं हुताशम् ॥ २७ ॥

**कुलपतिः**—अरे पाप, सत्वरमपसर । किमात्मनो वचनं श्रावयसि ।

**अंगारमुखः**—(सकपटम्)

प्रसीद वाचंयमधुर्य ते रुषा
कृतानुतापः स्वयमप्ययं नृपः ।
तपोभृतामेकधुरीण किं मुधा
महीभृतामेकधुरोऽवधीर्यते ॥ २८ ॥

**कुलपतिः**—अरे अंगारमुख, यदि परमयं भ्रूणहा सर्वस्वदानेनैव शुध्यति ।

**राजा**—(साश्वासम्)

प्रसीद त्वं त्रातर्विलयमयतां गर्भहरिणी-
विघाताविर्भूतं सपदि कलुषं दुस्तरमपि ।
सदुर्गा सग्रामा सगजतुरगा साश्रमपदा
मया तुभ्यं दत्ता चतुरुदधिकांची वसुमती ॥ २९ ॥

**अंगारमुखः**—(प्रणम्य) भगवन्, अयोध्याधिपतिर्यदभिधत्ते तत्प्रतिपद्यस्व ।

**कपिंजलः**—(अपवार्य) देव, किमिदम् ।

**कुंतलः**—देव, कोऽयमुत्पातः ।

**राजा**—(अवगणय्य) भगवन्, मदुक्तं मेऽस्तु ।

**कुलपतिः**—दत्ता मह्यं वसुमती भवता ।

**राजा**—युष्मभ्यं दत्ता वसुमती ।

**कुलपतिः**—नार्हसि वसुंधराया भोगमतः परम् ।

**राजा**—नार्हामि वसुंधराभोगमतःपरम् ।

**कुलपतिः**—कोऽत्र भोः ।

(प्रविश्यः तापसः) आदिशतु कुलपतिः ।

**कुलपतिः**—अये काश्यप । भागीरथीदक्षिणाश्रमवासिनं वाराणसीतः समायातमस्मदंतेवासिनं कौटिल्यमाकारय ।

(यदादिशति कुलपतिः । इत्यभिधाय काश्यपो निष्क्रांतः)

(प्रविश्य कौटिल्यः प्रणमति)

**कुलपतिः**—कौटिल्य, हरिश्चंद्रेण वसुंधरास्मभ्यं प्रतिपादितेत्यत्रार्थे त्वं साक्षी ।

कौटिल्यः—महाराज, अत्रार्थे वयं साक्षिणः ।

राजा—अत्रार्थे यूयं साक्षिणः ।

(प्रविश्य वैखानसः) भयवं[1], जाव विवन्ना हरिणी ।

कुंतलः—(अपवार्य) कपिंजल, यथायं बंदी पठितवांस्तथा व्यक्तं प्रातर्देवस्य प्रवासो भविष्यति ।

वैखानसः—आस्समपए[2] चिठ्ठइ ताव होमविही न पवट्टइ । तयाणिं किं करेदु ।

कुलपतिः—अग्निसंस्कारं च गत्वा कारय ।

वंचना—मैए[3] सह तीए अग्गिसक्कारो भविस्सइ ।

राजा—(प्रणम्य)

एकं क्षमस्व दुःसाधमपराधं तपोधने ।
वितरिष्याम्यहं तुभ्यं हेम्नो लक्षमसंशयम् ॥ ३० ॥

अंगारमुखः—यदयं वर्णाश्रमगुरुरभिधत्ते तदस्तु ।

वंचना—ऐवं[4] भोदु ।

कुलपतिः—दीयतां तर्हि सुवर्णमेतस्यै ।

राजा—कनकं भवद्भिरयोध्यामागत्य ग्रहीतव्यम् ।

कुलपतिः—न वयं प्रचुरपौरपांसुरासु नगरवसुंधरासु संचरामः ।

अंगारमुखः—भगवन्, यदभिधत्ते साकेतपतिस्तदस्तु ।

कुलपतिः—अस्तु किंतु यूयं मध्याह्नसंध्यामलंघयता साकेतपतिना विसर्जनीयाः ।

राजा—अवश्यमेतत् ।

(नेपथ्ये)

गाहंतां सरयूतटानि तुरगाः स्वैरं गणः सादिनां
तंद्रालुर्बहुलाश्रमक्षितिरुहच्छायासु विश्राम्यतु ।
कुंजेषु व्यवधास्थितेषु दधतामाधोरणाः कुंजरान्
वीक्षंतां च मृगयुवारवनिताः शक्रावतारश्रियम् ॥ ३१ ॥

---

१ भगवन्, यावद्विपन्ना हरिणी. २ आश्रमपदे तिष्ठति तावद् होमविधिर्न प्रवर्तते । तदानीं किं क्रियताम्. ३ मया सह तस्या अग्निसंस्कारो भविष्यति. ४ एवं भवतु.

**कुंतलः**—देव पाश्चात्यं सैन्यमागतम् ।

(पुनर्नेपथ्ये बंदी)

क्षीणाशेषनिजप्रतापविसरः संत्रुट्यदाशास्थितिः
प्रक्षिप्याखिलभक्षिणो हुतभुजो वक्त्रे समस्तं महः ।
उद्गच्छन्मुनिमंडलेन कलितं वृत्तैकभूः स्वं पदं
हित्वा क्रामति पश्चिमालयमयं देवो हहा गोः पतिः ॥३२॥

**कुलपतिः**—महाराज, प्रदोषसंध्यासमयोऽस्माकमिदानीम् ।

**राजा**—तर्हि वयम्—

ब्रह्मांडोदरसंचरिष्णुयशसो वंदारुवृंदारक-
श्रेणीशेखरपारिजातसुमनःकिंजल्ककिर्मीरिताम् ।
इक्ष्वाकुक्षितिपालसंततिगुरोः शक्रावतारस्थिते-
र्नाभेयस्य विलोक्य पादयुगलीं सौधाय चेष्टामहे ॥ ३३ ॥

**कुलपतिः**—वयमपि प्रादोषिकं संध्याविधिमनुष्ठातुं प्रतिष्ठामहे ।

(इति निष्क्रांताः सर्वे)

**इति प्रथमोऽङ्कः ॥**

---

# द्वितीयोऽङ्कः ।

(ततः प्रविशत्यमात्यो वसुभूतिः कुंतलश्च)

**वसुभूतिः**—ततस्ततः ।

**कुंतलः**—अनंतरं सकलदेवताधिचक्रवर्तिनः सरयूसीकरासार-संपर्कसततार्द्रपादपद्मस्य भगवतो नाभिनंदनस्य सांध्यं सपर्याविधि-माधाय देवः सौधमधिष्ठितवान् ।

**वसुभूतिः**—(विमृश्य) के पुनर्वराहं देवाय विज्ञप्तवंतः ।

**कुंतलः**—सर्वैरदृष्टचरः कोऽपि ।

**वसुभूतिः**—यदि सर्वैरदृष्टचरस्तर्हि व्यक्तमिदमिंद्रजालं कि-मपि । भवतु तावत् । संप्रति देवः क्वास्ति ।

**कुंतलः**—एष विलासमंडपे तिष्ठति ।

(ततः प्रविशति राजा सहर्षम् )

**कुंतलः**—(उपसृत्य) देव, अमात्यः प्रणमति ।

(वसुभूतिः प्रणम्योपविशति)

**राजा**—(सहर्षम्) अमात्य ह्यस्तनेऽहनि यदस्माभिर्वराहदेवकस्य पुरे प्रतिज्ञातं तदखिलं वराहं व्यापाद्य निर्व्यूढम् ।

**वसुभूतिः**—ह्यस्तनवृत्तांतं ज्ञातवानस्मि ।

**राजा**—(विहस्य) व्यक्तं कुंतलः कथितवान् ।

**वसुभूतिः**—देव ।

एतेन परमानंदरूपं प्राभवमुच्यते ।
अनौचित्यमपि स्तौति येनौचित्यमिवानुगः ॥ १ ॥

तथापि किमपि विपरीतं विज्ञपयिष्यामि ।

**राजा**—स्वैरं विज्ञपय ।

**वसुभूतिः**—वसुमतीपरित्यागो नाम समुचितः प्रतिभाति ।

**राजा**—अमात्य ।

उचितमिदमनुचितमिति प्रारंभात्पूर्वमेव युज्येते ।
प्रारब्धस्य तु निर्वहणं भूयात्संकलपनं न्याय्यम् ॥ २ ॥

अपि च ।

श्रियो नाशं यांतु व्रजतु निधनं गोत्रमखिलं
शिरश्छेदो वास्तु प्रभवतु समंताद्विपदपि ।
विवेकार्कज्योतिर्विघटितमहामोहतमसः
प्रतिज्ञातादर्थात्तदपि न चलंत्येव कृतिनः ।। ३ ।।

तदलमनया पूर्वकृतमीमांसया । प्रगुणय कनकलक्षम् । इदानीं समायाति कुलपतिः ।

(नेपथ्ये) इत इतः ।

**राजा**—अमात्य, समायात एव तापसः । तदुपनय सत्वरं कनकम् ।

**वसुभूतिः**—( कुंतलस्य कर्णे ) एवमेव ।

( एष समायातोऽस्मीत्यभिधाय कुंतलो निष्क्रांतः । )

( ततः प्रविशति कुलपतिरंगारमुखश्च )

**कुलपतिः**— (साश्चर्यम्) अंगारमुख, वचसामगोचरं किमप्यस्य त्रैशंकवस्य सत्त्वम् ।

**अंगारमुखः**—किं कदापि कमप्यनुचितमुपस्तौति । इंद्रो वा स्तोष्यति ।

**कुलपतिः**—ज्ञास्यामि यद्यतः परमपि सत्त्वमेवमस्य भविष्यति ।

**राजा**—( सरभसम् ) स्वागतं महर्षे । कोऽत्र भो आसनमासनम् ।

**कुलपतिः**—अलमासनेन । आकर्णय किमपि ।

**राजा**—आदिशतु कुलपतिः ।

**कुलपतिः**—

कृशानुसेवा फलकंदवर्तनं
जटाधरत्वं वनवासिनां व्रतम् ।
महीपतीनामिदमेव तु व्रतं
यदात्मसत्यात्प्रलयेऽपि न च्युतिः ।। ४ ।।

**राजा**—ततः किम् ।

**कुलपतिः**—

वनांतरात्प्रातरुपेत्य ते पुरीं
पुरोऽवतीर्णे मयि योगिनां वरे ।

न सांप्रतं सांप्रतमुन्नतस्थिते-
निजां प्रतिज्ञां प्रति कालयाधुना ॥ ५ ॥

राजा—भगवन्, कः कालयापनां करोति । उपनीतमेव कनकं पश्य ।

अंगारमुखः—महाराज ।

अकांडकोपेऽपि तपस्विनो दशां
विशंति तां या वचसामगोचरा ।
निजार्थभंगे सरुजस्तु तामसीं
दधत्यगम्यां मनसोऽपि विक्रियाम् ॥ ६ ॥

वसुभूतिः—तपोधना अपि तामसीं दशामुपासत इति केषां वाचोयुक्तिः ।

अंगारमुखः—(सोपहासम्) महाराज, तपोधनाचारचतुरः कोऽयम् ।

राजा—मुने, अमात्योऽयम् ।

कुलपतिः—किंनिमित्तोऽयं विलंबः ।

(प्रविश्य कनकभृतभाजनहस्तः कुंतलः)

कुंतलः—इदं कनकम् । आदिशतु देवः ।

राजा—मुनेरुपनय ।

कुलपतिः—(सरोषमिव) किमिदम् ।

राजा—वंचनाकनकम् ।

कुलपतिः—कुतः समानीतमेतत् ।

कुंतलः—कनककोशात् ।

कुलपतिः—कोशः पृथिव्या मध्ये किं बहिः ।

राजा—मध्ये ।

कुलपतिः—पृथिव्यां कः स्वामी ।

राजा—कुलपतिः ।

कुलपतिः—अंगारमुख, अस्मत्कांचनेनात्मानमनृणं कुर्वतः त्रैशंकवस्य महती सत्त्वकाष्ठा ।

राजा—समीचीनमाहायं कुलपतिः । कुंतल कनकं, यथास्थानमुपनय ।

(कुंतलो निष्क्रांतः)

कुलपतिः—व्रजामो वयम् । दृष्टं भवतः सत्यं सत्त्वं च ।

राजा—विलंबध्वं यूयं यावत्कनकमायात्यन्यतः । (पुनरमात्यस्य-कर्णे) एवमेवम् ।

वसुभूतिः—कोऽत्र भोः ।

(प्रविश्य)

पुरुषः—एषोऽस्मि ।

वसुभूतिः—(पुरुषस्य कर्णे) एवमेवम् ।

(पुरुषो निष्क्रांतः)

कुलपतिः—

पुरीं स्पृष्ट्वा क्रांत्वा भुवमुपहृतस्तापसविधि-
मया तस्मात्कन्याकनकमुपनेतुं भव भृशः ।
न चेत्त्वां भ्रूणस्त्रीवधकमधिकक्रोधविधुरो
विधास्ये शापोत्थज्वलदनलभस्मीकृततनुम् ॥ ७ ॥

राजा—(सभयम्) अमात्य, कोऽयं विलंबः ।

(प्रविश्य)

प्रतीहारः—देव, वणिजो द्वारि संति ।

राजा—शीघ्रं प्रवेशय ।

(आदेशः प्रमाणमित्यभिधाय प्रतीहारो निष्क्रांतः)

(ततः प्रविशंति कृतोष्णीषाः पंचषा वणिजः)

कुलपतिः—(अपवार्य) अंगारमुख, वणिजो दिव्येन प्रभावेण निवारय ।

अंगारमुखः—पूर्वमेव निवारिताः ।

वसुभूतिः—(वणिजां कर्णे) एवमेवम् ।

वणिजः—(अपवार्य परस्परम्) [1]अदोवरं अह्माणं तावसो सामी ता किं हरियंदस्स कणगेण दिन्नेण ।

राजा—(सविनयम्)

अधस्ताद्वः पौराः कृत इव मया पाणिरघृणा-
द्दणादेतस्मान्मां विरहयत यूयं कथमपि ।

---

१ अतःपरमस्माकं तापसः स्वामी तत् किं हरिश्चंद्रस्य कनकेन दत्तेन ।

अहं युष्मभ्यं स्वं ननु पुनरहोभिः कतिपयैः
कुतश्चिद्याचित्वा नियतमुपयच्छामि निखिलम् ॥ ८ ॥

वणिजः—भट्टा[1] अप्पदव्विणो अह्मे कणयलक्खं दाउं समत्था ।

वसुभूतिः—(सरोमांचम्) कुलपते ।

लोकः प्रायो भवति यतिनां विश्वदृश्वा ततो वः
किंचित् पृच्छाम्यतनुकुतुकोत्तालवाचालवक्त्रः ।
दृष्टः कोऽपि क्षितिपतिरिमां क्ष्मां भ्रमद्भिर्भवद्भिः
सत्त्वावासः कचिदपि हरिश्चंद्रसब्रह्मचारी ॥ ९ ॥

अंगारमुखः—(सोपहासम्) अये महामात्य आम, विश्वदृश्वानस्तपोधनाः प्रायो भवंति । परमस्माभिर्भूतधात्रीमशेषां भ्रमद्भिर्न भवतः सदृशो बुद्धिमानमात्यो नापि क्षितिपतिर्हरिश्चंद्रतुल्यः कोऽपि सात्त्विको दृष्टः ।

कुलपतिः—(राजानं प्रति सरोषम्)

अह्नाय किं न यतसे कनकार्पणाय
मध्याह्नकृत्यसमयो ननु हीयते नः ।
आकस्मिकं किमथवा यशसः कुलस्य
लोकस्य च प्रलयमीक्षितुमुत्सुकोऽसि ॥ १० ॥

राजा—(सभयं प्रणम्य)

केयं योगीश्वर दिनकरादंधकारप्रसूतिः
को वाकांडे तुहिनमहसो रंगदंगारपातः ।
कस्माल्लोकत्रितयकुशलध्यायकेभ्यो मुनिभ्यो
भास्वद्वंश्यक्षितिपतिभुवः सर्वसंहारभावः ॥ ११ ॥

कुलपतिः—(साक्षेपम्) आः पाप कौक्कुटिक, पुनः पुनर्मां विप्लावयसि ।

राजा—(सभयं प्रणम्य पादौ स्पृशति)

कुलपतिः—(राजानं पार्ष्णिना प्रणिहन्ति)

राजा—(पुनः पादौ स्पृशति)

अंगारमुखः—(साक्षेपम्)

---

१ भर्तः, अल्पद्रव्या वयं न कनकलक्षं दातुं समर्थाः ।

जंघाल बालचरिताध्वनि साधुवृत्त-
लुटाक कौक्कुटिक कर्मसु धार्मिकेषु ।
वाचाल चाटुषु किमन्यदसत्यसंध
संध्याविधिं किमु विहंसि वृथा मृषोद्यैः ॥ १२ ॥

**वसुभूतिः**—(सरोषमिव कुलपतिं प्रति)
एतैः किमाकस्मिकरोषविप्रुषां
भरैः परब्रह्मलयः कलंक्यते ।
भवादृशां विश्वजनीनकर्मणा-
मनात्मनीना न भवंति वृत्तयः ॥ १३ ॥

**कुलपतिः**—(सरोषम्) अस्थापितमहत्तर अरे मुखर, अस्मत्पर-ब्रह्मचिंतायां कस्त्वमसि ।

**अंगारमुखः**—अरे क्षत्रियाधम त्रैशंकव, कथंकारमेतमंतरालाभिलापिनं वाचालबटुं न निवारयसि ।

**राजा**—अंगारमुख,
मुनिरसि विरसानि ब्रूहि सर्वंसहोऽस्मि
व्रतिषु तरणिवंश्याः कच्चिदूर्जां भजंते ।
रसमृदुलमृणालच्छेदकौतूहलेषु
स्पृहयति पुरुहूतः किं नु दंभोलिकेलिम् ॥ १४ ॥

**अंगारमुखः**—नाहं व्रती किंतु व्रतिवेषो ब्रह्मराक्षसः । ततो यदि शक्तिरस्ति तदा प्रहर ।

**राजा**—(स्वगतम्) किममुना तापसेन सह प्रतिज्ञाविघातकारिणा कलहेन । (प्रकाशम्) कोऽत्र भोः ।

(प्रविश्य)

**कपिंजलः**—आदिशतु देवः ।

**राजा**—कपिंजल, अस्मदाभरणानि समानय ।

**अंगारमुखः**—अस्मत्किंकरस्याभरणान्यस्मदीयान्येव । ततस्तान्यासताम् ।

**वसुभूतिः**—कुलपते यावदयोध्याधिपतिः कनकलक्षं दातुं प्रभवति तावन्मां गृहाण । यदि वा कनकलक्षमूल्यान् करिणो वाजिनः पताकिनो वा कलय ।

**कुलपतिः**—अरे, जूर्णमार्जारेण भवता कमर्थं साधयामि । करिवाजिपताकिनस्तु वसुंधरया सहैवाम्रे गृहीताः ।

**कपिंजलः**—तर्हि मां गृह्णातु कुलपतिः ।

**अंगारमुखः**—अरे कपिंजल, वराटिकार्हेण पदातिपांशुना भवता कनकलक्षमुपेक्षितुं न शिक्षितः कुलपतिः ।

**वसुभूतिः**—(सरोषं राजानं प्रति)

न नाम स्युः स्वर्णक्षितिसुतकलत्राणि यतिनां
तदस्मै यद्दत्तं तदिह निखिलं भस्मनि हुतम् ।
विहाय व्यामोहं विमृश विमृशाद्यापि नृपते
तपोव्याजच्छन्नं किमपि नियतं दैवतमिदम् ॥ १५ ॥

**कुलपतिः**—(सोपहासम्) अरे मुखर सचिवापसद, चिराद्यथार्थमभिहितवानसि । दुस्तपतपःकरकलितस्वर्गापवर्गशर्माणो मर्त्यापदेशेन दैवतान्येव मुनयः ।

**वसुभूतिः**—(साश्चर्यमिव)

मृगमदमृगप्रायैः कीर्णैर्मृगैरुटजे स्थितिः
सरसपनसश्लाघ्यैर्वृत्तिः सुखोपनतैः फलैः ।
मदनजरुजाच्छेदी वैद्यः सदा सविधे प्रिया
वपुरपगमे स्थानं मुक्तावहो विषमं तपः ॥ १६ ॥

**कुलपतिः**—अरे जिव्हाल, प्रगल्भस्व वक्रोक्तिभिस्तावद्यावद्वयं भवद्वचनानुरूपं नाचरामः ।

**वसुभूतिः**—अये तापस, अचिराय समाचर स्वाभिप्रेतम् ।

**कुलपतिः**—(सरोषम्) अंगारमुख, उपनय कमंडलुं येन दुरात्मानमेनं शपामि ।

**राजा**—(सभयं प्रणम्य) भगवन्, किममुना सह वृथा कोलाहलेन । अहमस्मि ते निदेशस्थायी । समादिश किं करोमि ।

**कुलपतिः**—(साक्षेपम्) किमस्मान् भूयो भूयः पृच्छसि । ननु शतशः समादिष्टं वंचनाकनकमुपानय । प्रत्यासीदति प्रदोषसंध्या ।

**राजा**—(विमृश्य) कोऽत्र भोः ।

(प्रविश्य)

**कुंतलः**—आदिशतु देवः ।

राजा—(कुंतलस्य कर्णे) एवमेवम् ।

(कुंतलो निष्क्रांतः)

(नेपथ्ये) [1]अहं सयं चेव आगच्छिअ आहरणाइ तावसस्स उवणइस्सं ।

राजा—(अपवार्य) अमात्य, कथमागच्छति स्वयं देवी ।

(ततः प्रविशति कुंतलेनादिश्यमानमार्गा देवी सुतारा रोहिताश्वश्च ।)

सुतारा—(प्रणम्य) [2]भयवं, गिण्ह एयाइं मे आहरणाइं ।

अंगारमुखः—(सोपहासम्) साधु पतिव्रते, साधु ।

कुलपतिः—(सावज्ञम्) भद्रे, कनकाभरणं पैतृकं भार्तृकं वा ।

सुतारा—(सभयम्) [3]अज्जउत्तेण एअं पसाईकिअं ।

कुलपतिः—(साक्षेपम्) अस्मदीयमेवास्माकमर्पयसि । अहो ते दक्षता ।

अंगारमुखः—कुलपते, नन्वियं हरिश्चंद्रस्य कैतवनिधिर्भार्या ।

रोहिताश्वः—(प्रणम्य सभयम् ।) [4]मं गिण्ह मिल्हिहि मे पिअरं ।

(राजा सबाष्पमधोमुखस्तिष्ठति)

कुलपतिः—(अपवार्य) अंगारमुख, सबाष्पनिरुद्धकंठः प्रत्युत्तरं दातुमस्मै बालकाय न शक्नोमि ।

अंगारमुखः— आत्मानमधुनैव मा मुंच । (पुनः सुतारां प्रति) दंभानिपुणे, त्वयायं बालको वक्तुमिदं शिक्षितः ।

(सुतारा सबाष्पमधोमुखी तिष्ठति)

अंगारमुखः—(सोपहासम्) पतिव्रते यथास्थानं गत्वा समुपविश ।

कुंतलः—(सरोषम्) आः पाप तापसपिशाच, सतीचक्रचूडामणिं देवीं सुतारामुपहससि । एष ते तरवारिणा शिरः पातयामि ।

अंगारमुखः—अरे कर्मकरापसद, मामासादितब्रह्माणं तपोधनमधिक्षिपसि । यदि मे तपसः फलमस्ति तदिदानीं श्मशानवासी शृगालो भव ।

(कुंतलः शृगालो भूत्वा शब्दायमानो निष्क्रांतः)

---

१ अहं स्वयमेवागत्याभरणानि तापसस्योपनेष्यामि. २ भगवन्, गृहाणैतानि मे आभरणानि. ३ आर्यपुत्रेणैतत् प्रसादीकृतम्. ४ मां गृहाण मुंच मे पितरम्.

**राजा**—(सभयं विमृश्य) भगवन्, मासमेकं सहस्व यावत्कुतोऽपि कनकमुपनयामि ।

**कुलपतिः**—मासानंतरं दास्यसि किं भिक्षयित्वा ।

**राजा**—इक्ष्वाकवो भिक्षां दातुं शिक्षिता न पुनर्ग्रहीतुम् ।

**कुलपतिः**—कुतस्तर्हि ।

**राजा**—आत्मानं विक्रीय दास्यामि ।

**कुलपतिः**—भवत्वेवम् । किंतु वसुंधरां त्यज मे सत्वरम् ।

**राजा**—(सरोमांचम्)

त्यज धरणिमिमां मे नास्मि सोढा तवाहं
कियदिदमुपदिष्टं नस्त्वया तापसेंद्र ।
ननु दिनकरवंश्याः स्वस्य संधां ससंधां
विरचयितुमसून्प्यस्ततंद्रास्त्यजंति ॥ १७ ॥

**कुलपतिः**—(अपवार्य अंगारमुखं प्रति) अहो सत्यमहो सत्त्वम् । कतिसात्विकपुरुषरत्नगर्भा भगवती वसुमती ।

**सुतारा**—(अपवार्य सास्रम्) [1]अमच्च, किंपयं अह्माणं अरिट्ठमावडिअं ।

**वसुभूतिः**—(सबाष्पम्) देवि, किं मां पृच्छसि । देवं पृच्छ ।

**राजा**—मुने, वसुंधरामपहाय क्व व्रजामि ।

**कुलपतिः**—यत्र नोपलक्ष्यसे ।

**राजा**—(विमृश्य) देवि, अंतःपुरे गच्छ ।

**सुतारा**—[2]अहंपि अज्जउत्तेण सह आगमिस्सं ।

**राजा**—(सबाष्पम्)

शीतालुस्तनयः शयालुरथवोष्णालुः प्रकृत्या महान्
शीतोष्णश्रमखेदवेदनकरं घोरांतरं प्रांतरम् ।
पंथानो गतवाहना च भवती नो गाढमूर्जस्वला
तत्त्वं देवि समं सुतेन शिशुना तिष्ठात्र यामो वयम् ॥ १८ ॥

**सुतारा**—[3]जं भोइ तं भोउ । अहं अज्जउत्तेण सह आगमिस्सं ।

---

१ अमात्य, किंपदमस्माकमरिष्टमापतितम्. २ अहमपि आर्यपुत्रेण सहागमिष्यामि. ३ यद्भवति तद्भवतु । अहं आर्यपुत्रेण सहागमिष्यामि.

कुलपतिः—पतिव्रते, कुत्र केन सह चालितासि।

सुतारा—[1]भयवं, अज्जउत्तेण सह देसंतरं गमिस्सं।

कुलपतिः—अस्मदायत्तां भवतीं त्रैशंकवो नेष्यतीति महदाश्चर्यम्।

वसुभूतिः—अये तापस, अनभिज्ञोऽसि लोकव्यवहाराणाम्। पतिदेवता हि स्त्रियो न परायत्ताः।

कुलपतिः—(सरोषहासम्) अये लोकव्यवहारनदीष्ण महामात्य, एतान्येवाक्षराणि महासत्त्वचूडामणिमेनं महाराजमध्यापय। (हरिश्चंद्रं प्रति साक्षेपम्।) उदात्तावतंस पतिदेवतेयं सुतारा न ममायत्ता।

राजा—

अश्वीयस्य च हास्तिकस्य च तथा स्त्रैणस्य पौंस्नस्य च
रथ्यानामथ मंत्रिणः किमपरं देव्याश्च वत्सस्य च।
स्वामी तापस एव संप्रति ततो यद्येष देव्या मया
सार्द्धं संसहते गतिं सतनया कामं समागच्छतु॥ १९॥

कुलपतिः—(अपवार्य) अंगारमुख सेयं सत्त्वस्य परा काष्ठा।

अंगारमुखः—पुरंदरनिर्णीतोऽर्थः प्रलयेऽपि किं विघटते।

सुतारा—(प्रणम्य) [2]भयवं, अणुजाणेहि मं।

कुलपतिः—एवमस्तु। किंत्वाभरणानि विमुच्य वसनमात्रेण नेपथ्येन गंतव्यम्।

(राजा मुकुटादीन्याभरणानि विमुंचति)

सुतारा—[3]भयवं, अविहवालक्खणं मे आहरणं चिट्ठउ।

कुलपतिः—त्रैशंकव एवाविधवालक्षणं भवत्याः।

सुतारा—सबाष्पमाभरणानि विमुंचति।

वसुभूतिः—(सरोषम्) अये ब्रह्मराक्षस।

तुभ्यं ददद्वसुमतीं ननु तापसाय
विज्ञः किमेष नृपतिः परिहासपात्रम्।
त्वं तापसः किमथवा भवसंगभंग-
श्रद्धालुरस्तविषयः कलयन्नमुष्मात्॥ २०॥

---

१ भगवन्, आर्यपुत्रेण सह देशांतरं गमिष्यामि. २ भगवन्, अनुजानीहि माम्. ३ भगवन्, अविधवालक्षणं मे आभरणं तिष्ठतु.

**कुलपतिः**—(सरोषम्)

नाहं परिग्रहनिवृत्तमना मुनींद्रो
नाप्येष कृत्यविदुरो नृपतिश्च हास्यः ।
दानांतरायपरिबोधितशापसर्प-
ग्रासीकृतः किमुत रे सचिवाधमस्त्वम् ॥ २१ ॥

अंगारमुख उपनय कमंडलुम् ।

(अंगारमुखस्तथा करोति)

**कुलपतिः**—अरे वाचाल! अनुभव मुखरतायाः फलम् । यदि मे सप्रभावं तपस्तदिदानीं शुको भव । (कमंडलुतश्चुलुकमादाय भूमौ क्षिपति)

(वसुभूतिः शुको भूत्वा नभस्तलमुत्पतितः)

**सर्वे**—(सभयं प्रणम्य) परमेश्वर, उपसंहर, क्रोधम् । समलंकुरु सत्वरमाश्रमम् । एते वयं भवतो वसुंधरामपहाय गता एव देशांतरे ।

(नेपथ्ये)

सप्तार्णवीनिवसनामवनीं गृहीत्वा
लक्ष्मीविशेषकममुं दिशतो वनाय ।
आः पाप तापस किरात कृशानुकीर्णं
वज्रं न किं पतति मूर्धनि ते नभस्तः ॥ २२ ॥

**राजा**—(सभयमपवार्य) कपिंजल, निवारय पुरलोकम् । अपरथा तापसः क्रोत्स्यति ।

(कपिंजलो हस्तसंज्ञया वारयति)

**कुलपतिः**—(अनाकर्णितेनैव) त्रैशंकव, किमद्यापि विलंबः ।

**राजा**—भगवन्, एष गत एव । (पुनरंजलिं बद्ध्वा)

इक्ष्वाकुक्षितिपालपौरुषकथासाक्षिण्ययोध्ये नमः
पौराः सांप्रतमेष वो मुनिरधिष्ठाता गुरुर्दैवतम् ।
दत्तास्मै यदियं मया वसुमती सप्तार्णवीमेखला
भास्वद्वंश्यभुवां हि भूतलभुजां सत्यव्रतं पालितम् ॥ २३ ॥

(वणिजो मंदं मंदं रुदंति)

**राजा**—देवि, अवलंबस्व मद्वचनम् । अत्रैव तिष्ठ । अशिक्षितपादचारा न शक्नोति भवती क्रमितुं दर्भांकुरविधुरासु वनवसुंधरासु ।

सुतारा—[1]जं भोइ तं भोउ । अहं आगमिस्सं ।

राजा—

त्यजन् हेम्नो लक्ष्यं चतुरुदधिकांचीं च वसुधां
सुधांभोभिः स्नानादपि समधिकां प्रीतिमभजम् ।
सवत्सामेतां तु प्रवसनपरां वीक्ष्य दयिता-
मिदानीं मन्येऽहं ज्वलदनललीढं वपुरदः ॥ २४ ॥

(नेपथ्ये)

असूर्यंपश्यायाः प्रकटमिदमालोक्य सहसा
सदस्यंगं देव्याः शिबिनृपतिदुग्धार्णवभुवः ।
अयं तिग्माभीशुर्भरतकुलमूलप्रसविता
वधूगात्रस्पर्शाच्चकितचकितः कर्षति करान् ॥ २५ ॥

कुलपतिः—(ऊर्ध्वमवलोक्य) कथं प्रदोषसंध्यावसानसमयः । महाराज, व्रजामो वयमाश्रमम् ।

राजा—विजयंतां कुलपतिमिश्राः । कपिंजल, अनुव्रज मुनीन् ।

(कुलपतिरंगारमुखकपिंजलाभ्यां सह निष्क्रांतः)

राजा—(वणिजः प्रति अंजलिं बद्ध्वा)

क्रोधोद्बोधवशाच्चिरं परिचयादग्रप्रतापोद्धुर-
स्कंधाभोगभरात्सविस्तरमदादुल्लंघशाठ्यादथ ।
राज्यश्रीप्रणयोन्मदिष्णुहृदयस्फारस्मयोच्छृंखलै-
रस्माभिर्यदि किंचिदप्यपकृतं तत् क्षाम्यत क्षाम्यत ॥ २६ ॥

(सर्वे रुदंति)

राजा—(अलं रुदितेन) व्रजत स्वस्थानं यूयम् । वयमपि देशांतराय संरभामहे ।

(इति निष्क्रांताः सर्वेऽपि)

द्वितीयोऽङ्कः समाप्तः ॥

---

१ यद्भवति तत् भवतु । अहमागमिष्यामि.

# तृतीयोऽङ्कः ।

(ततः प्रविशति राजा सुतारा रोहिताश्वश्च)

**राजा**—(विलोक्य) कथं प्रभातप्राया रजनिः । देवि, पश्य पश्य ।

विश्वंभराभरवियोगवतो ममैव
सत्त्वं विलोकयितुमुत्सुकपादचारः ।
तिग्मांशुवंशविनिवेशनिदानमेष
पूषाधिरोहति शिखामुदयाचलस्य ॥ १ ॥

**सुतारा**—(सखेदम्) [1]अज्जउत्त, कित्तिअं अज्जवि गंतव्वं ।

**राजा**—देवि, पर्याप्त एव पंथाः । प्राप्ता वयं वाराणसीम् । पश्यति न देवी पुरः पुरस्याभिज्ञानानि वापीनिकेतनापणवनचैत्यादीनि।

**सुतारा**—(निःश्वस्य) [2]अज्जउत्त, मग्गपरिलंबणेण परिसंतह्मि ।

**राजा**—(विलोक्य) नक्तंदिनं चरणचंक्रमणेन परिश्रांता देवी । तदा भागीरथीशीकरनिकरव्यतिकरसांद्रस्तबकस्यास्य चंपकस्य मूले विश्राम्यतु देवी ।

(राजा सुतारा रोहिताश्वश्च सखेदं निषीदंति)

**राजा**—संवाहयामि चरणचंक्रमणेन बालमृणालकोमलानि सुचिरमायासितानि ते अंगानि । चरणतलाभ्यां च दर्भांकुरमपनयामि।

(सुतारा मंदं मंदमधोमुखी रोदिति)

**रोहिताश्वः**—[3]ताय, कंटकेन विद्धो मे पाउं ।

**राजा**—(सकरुणम्) पुत्र, कंटकेन पादकस्ते विद्धः । उपनय पादकम् । येन कंटकमपनयामि ।

(नाख्येन कंटकमपनयति)

**रोहिताश्वः**—(सास्रम्) [4]ताय, बुभुक्खिउह्मि ।

**राजा**—(ससंरंभम्) वत्स, त्वां बुभुक्षा बाधते । कोऽत्र भोः । अये उपनय वत्साय मोदकम् । (विलोक्य सलज्जम्) कथममतो न कोऽपि पार्श्वतोऽपि न कश्चित् ।

---

१ आर्यपुत्र, कियदद्यापि गंतव्यम्. २ आर्यपुत्र, मार्गपरिलंबनेन परिश्रांतास्मि. ३ तात, कंटकेन विद्धो मे पादः. ४ तात, बुभुक्षितोऽस्मि.

सुतारा—[1]अज्जउत्त, किं णेदं ।

राजा—देवि, पूर्वसंस्कारो विप्लावयति ।

रोहिताश्वः—[2]अंब, बुभुक्खिउह्मि ।

(सुतारा सबाष्पमधोमुखी तिष्ठति)

रोहिताश्वः—[3]अंब, बुभुक्खिउह्मि ।

सुतारा—[4]चक्कवट्टिपुत्तलक्खणसमलंकिअसरीरस्स भरदकुलजादस्स दे किं एदमुवत्थिदं । (उच्चैःस्वरं रोदिति)

राजा—

किं देवि ताम्यसि विषीदसि किं कथं च
संतप्यसे स्मरसि किं नृपतिस्थितीनाम् ।
सत्यव्रताचरणपीवरगौरवाणां
निष्कंटकं मृगघने विपिनेऽपि राज्यम् ॥ २ ॥

रोहिताश्वः—[5]ताय, बुभुक्खिउह्मि ।

राजा—(स्वगतम्) कुतूहलदर्शनेनात्यंतरयाम्यस्य चेतः। (प्रकाशम्) वत्स, पश्य ।

गंगेयं कलहंसिकेयमपरा सेयं लघुः सारसी
कोकद्वंद्वमिदं शुकोऽयमपरः सोऽयं कलः कोकिलः ।
नृत्यत्येष मुहुः कलापवलयं व्याधूनयन् बर्हिणः
कांतां मंद्ररुतस्तथैष परितः पारावतो नृत्यति ॥ ३ ॥

रोहिताश्वः—[6]एसा गंगा ।

राजा—वत्स, एषा गंगा ।

रोहिताश्वः—[7]एसा कलहंसिआ ।

राजा—वत्स, एषा कलहंसिका ।

रोहिताश्वः—[8]ताय, बुभुक्खिउह्मि ।

राजा—वत्स, क्षणं मर्षय यावत्पुरीं प्रविशामः ।

---

१ आर्यपुत्र, किंन्विदम्. २–३ अंब, बुभुक्षितोऽस्मि. ४ चक्रवर्तिपुत्रलक्षणसमलंकृतशरीरस्य भरतकुलजातस्य ते किमिदमुपस्थितम्. ५–८ तात, बुभुक्षितोऽस्मि. ६ एषा गंगा. ७ एषा कलहंसिका.

**रोहिताश्वः**—[1]ताय, न सक्केमि विलंबिउं । अयिचिरं बुभुक्खिउह्मि । अंब, मोअगे देहि मे ।

**राजा**—(सबाष्पम्)

राज्यस्य तस्य चतुरर्णवकूलमूल-
संक्रांतकांतयशसः फलितं तदेतत् ।
वत्सस्यताररुदितध्वनिशुष्कतालो-
र्यत्प्रातराशकवलोपनयेप्यशक्तिः ॥ ४ ॥

भवतु तावदेनां वृद्धां व्यध्वगां पुरीप्रवेशमार्गं पृच्छामि ।

(ततः प्रविशति मूर्ध्निकृतपाथेयभांडा वृद्धा)

**राजा**—आर्ये, देशांतरिणो मार्गानभिज्ञा वयम् । तदावेदय पुरीप्रवेशसरणीम् ।

**वृद्धा**—[2]महाभाय, चक्कवट्टिलक्खणाइं दे सरीरयह्मि । ईदिसी अवत्था । ता किंणेदं ।

**राजा**—आर्ये, अवस्थाविरुद्धमस्मच्चरितमश्रद्धेयम् । ततः किं तेन ज्ञातेन ।

**रोहिताश्वः**—[3]ताय, बुभुक्खिउह्मि ।

**वृद्धा**—(सकरुणम्) [4]पुत्तय, गिण्ह एअं मे भोअणं (पाथेयमर्पयति)

**राजा**—आर्ये, न वयं परतोऽनुकंपाभोजनमभिलषामः ।

**वृद्धा**—[5]जई एवं ता एइणा मग्गेण पुरं वच्च । (इत्यभिधाय निष्क्रांता)

**राजा**—यद्यपेतश्रमासि तदा पुरीं प्रविशामः ।

**सुतारा**—(सास्रम्) [6]अपरिब्भट्ठो रिउउललज्जो एकहं पुरं पविसिऊं सक्कस्सदि अज्जउत्तो ।

**राजा**—(सावष्टंभम्)

---

१ तात, न शक्नोमि विलंबितुम् । अतिचिरं बुभुक्षितोऽस्मि । अंब, मोदकं देहि मे. २ महाभाग, चक्रवर्तिलक्षणानि ते शरीरे । ईदृश्यवस्था । तत् किमिदम्. ३ तात, बुभुक्षितोऽस्मि. ४ पुत्रक, गृहाणैतन्मे भोजनम्. ५ यदेवं तदेतेन मार्गेण पुरं व्रज. ६ राज्यपरिभ्रष्टो रिपुकुललज्ज एकाकी पुरं प्रवेष्टुं शक्ष्यत्यार्यपुत्रः.

परिभ्रष्टो राज्यात्परिहृतसमीपः परिकरै-
र्नेनामांतर्दूये किमपि न च लज्जे रिपुकुलात् ।
प्रतिज्ञातं कृत्यं घटयितुमुपारूढमनसा-
मुदात्तानां सोऽयं दुरितपरिरंभो ननु महः ॥ ५ ॥

**सुतारा**—(सबाष्पम्)

[1]तं किंपि दिव्ववत्थू अतक्किअं कज्जमेअमुत्थरियं ।
अप्पाणस्स परिहवो महूसवो जत्त वैरीणां ॥ ६ ॥

**राजा**—किमेवमभिदधासि ।

श्रिया वा स्थाम्ना वा विधिभिरपरैर्वा किमपरं
परेभ्यो हीनः स्यां यदि ननु तदानीं परिभवः ।
पुरा चीर्णं कर्म प्रथयति यदेतां तु घटनां
परेषामत्रार्थे प्रसरतु कुतस्त्यो मदमहः ॥ ७ ॥

तदलमपरमीमांसया । प्रयतस्व पुरीमध्यमध्यासितुम् ।

(सुतारा सखेदमुत्थाय परिक्रामति)

**राजा**—(विमृश्य) देवि, प्रत्यासीदति कनकदानावधिर्मासः । तद्विचिंतय कनकसंपत्तिम् ।

**सुतारा**—(सखेदम्) [2]मं एदं वत्सं विक्किणिय हिरणं गिण्हदु अज्जउत्तो ।

**राजा**—(साक्षेपम्) किमेवमभिदधाति भवती । यदि विक्रयस्तदा सर्वेषां न पुनरेकस्य कस्यचित् ।

**रोहिताश्वः**—(सास्रम्) [3]ताँय, मं मा विक्किणेसु । अंब, निवारेहि तादं जेण मं न विक्कणेइ ।

(सुतारा तारस्वरं रोदिति)

**राजा**—(बाष्पं निरुध्य) वत्स, कस्त्वां विक्रेष्यति ।

---

१ तत् किमपि दिव्यवस्तु अतर्कितं कार्यमेवमुत्तीर्णम् । आत्मनः परिभवो महोत्सवो यत्र वैरिणाम्. २ मामेतं वत्सं विक्रीय हिरण्यं गृह्णात्वार्यपुत्रः. ३ तात, मां मा विक्रीणीहि । अंब, निवारय तातं येन मां न विक्रीणाति.

**रोहिताश्वः**—तुमं मं विक्कणेसि । अंब, अहं तुह समीवे चिट्ठिस्स । न उण परघरे गमिस्सं ।

**राजा**—(अपवार्य) देवि, निवारय कथमपि वत्सं । न शक्नोमि समाकर्णयितुं सकरुणं वचः ।

**सुतारा**—पुत्तय, तुमं चक्कवट्टी भविस्सइ ताविं कोवि तुमं न विक्किणस्सदि । चिट्ठ मा रुअसु ।

**राजा**—(विलोक्य) देवि, यथायमितस्ततः सरभसं क्रयविक्रयाकुलो लोकः परिभ्राम्यति तथा व्यक्तं भृतकविक्रयापणवीथिकेयम् । तदस्यामूर्ध्वस्था एवास्महे। अपि नाम कोऽपि मां भृतकार्थी क्रीणीयात् ।

(सर्वे परिपाट्या तिष्ठंति । राजा किमपि विमृश्य निष्क्रम्य च गृहीतदर्भपूलः प्रविशति)

**सुतारा**—अज्जउत्त, किं नेदं ।

**राजा**—देवि, क्रेतव्यमानुषाभिज्ञानमिदम् । (आत्मनः सुताराया रोहिताश्वस्य च शिरसि दर्भपूलं निवेशयति)

**रोहिताश्वः**—(सास्रम्) तांद, मा मह सिरसि दब्भं पक्खिवेसु । (शिरो धूनयति)

**राजा**—(सबाष्पम्) वत्स, विधेहि मे वचनम्। तुभ्यमहं हस्तिनं दास्यामि ।

**सुतारा**—(सबाष्पम्)

सा कत्थ रज्जनत्थिप सा विक्कयविडंबणा कत्थ ।
एगंमि विही जम्मे जम्मसयं दंसइ कियंतो ॥ ८ ॥

**राजा**—(सधैर्यम्) देवि,

---

१ त्वं मां विक्रीणासि । अंब, अहं तव समीपे स्थास्यामि । न पुनः परगृहे गमिष्यामि. २ पुत्रक, त्वं चक्रवर्ती भविष्यसि तदापि कोऽपि त्वां न विक्रेष्यति । तिष्ठ मा रुदिहि. ३ आर्यपुत्र, किमेतत्. ४ तात, मा मम शिरसि दर्भं प्रक्षिप. ५ सा कथं राज्याधिपता सा विक्रयविडंबना कथम् । एकस्मिन् विधिर्जन्मनि जन्मसर्वं दर्शयति कियत्.

अनुसर चरितानि सात्त्विकाना-
मलममुना परिदेवितेन देवि ।
अयमपि च दधाति रोहिताश्वो
भयमवलोक्य तवेदृशीमवस्थाम् ॥ ९ ॥

(सुतारा मंदं मंदं रोदिति)

**राजा**—(विमृश्य)

सहास्तिकतुरंगमा सपुरकोशदेशानुगा
तथा मम न कीर्तये मुनिजनाय दत्ता मही ।
श्रवांसि महतां मुहुः शिखिशिखाभिरासिंचती
प्रियातनयविक्रयश्रुतिरकीर्तिभूत्यै यथा ॥ १० ॥

ततस्त्वं देवि वत्समादाय पितृगृहं व्रज ।

**सुतारा**—(साक्षेपम्) विगयरज्जं[1] अज्जउत्तं परिवज्जअ पिदहरं वचंती सयं चेव अहं दुज्जणा जाया । जउ भृतकापणवीथिसामन्नं सव्वत्थवि विहवमडप्फरपरेसु दिअहेसु सयणाणं दुज्जणाणं विहवा-भावंमिउ विवेउत्ति ता पढमं मह विक्कणउ । पत्था अज्जउत्तस्स ।

(ततः प्रविशति द्विजः)

**द्विजः**—सांप्रतं भृतिकाशून्यं मे सदनम् । तदहमस्यां भृतकापणवीथ्यां भृतिकां कामपि विलोकयामि । (पुरो विलोक्य सकौतुकं सुतारां प्रति)

का त्वं सुंदरि कस्तवात्र जनकस्त्राता सुहृद्बांधवः
कः पुण्यैकनिधिः सरोजसुभगं पाणिं तवापीडयत् ।
कुत्रत्यासि किमर्थमिंदुवदने सौभाग्यसौरभ्यभू-
रात्मायं दुरितस्य केलिसदने दास्याय संकल्प्यते ॥ ११ ॥

(सुतारा सबाष्पमधोमुखी भवति)

**द्विजः**—(विलोक्य राजानं प्रति)

---

१ विगतराज्यमार्यपुत्रं परिवर्ज्य पितृगृहं व्रजंती स्वयमेवाहं दुर्जना जाता । यदा भृतकापणवीथिभूम्यां सर्वत्रापि विभवगर्वपरेषु दिवसेषु सज्जनानां दुर्जनानां विभवाभावेऽविवेक इति । तत् प्रथमं मम विक्रयः । पश्चादार्यपुत्रस्य.

आकारः क्षितिभारधारचतुरः श्रेणिर्वपुर्लक्ष्मणां
विश्वस्यापि दरिद्रतानवलताकंदच्छिदाशंसिनी ।
वेषस्त्वेष मलीमसः शिरसि च कैतव्यचिह्नं कुशः
स्थानं कर्मकरापणाध्वनि ततः कस्त्वं कथां ब्रूहि नः ॥१२॥

**राजा**—(सखेदमिव)
सखे प्राचीनं नौ विभवमथ वृत्तं कुलमथो
समाकर्ण्यास्तोकं मनसि खलु शोकं घटयिता ।
किमेतैस्तैर्ज्ञातैरभिलषसि भृत्यां यदि तदा
गृहाणैतां नो चेन्निजमपरकृत्यं विरचय ॥ १३ ॥

**द्विजः**—(ऊर्ध्वमवलोक्य सखेदम्)
आजीवितांतमाधेयं परकर्म पुरोऽपि यैः ।
गर्भ एव न किं ध्वस्तास्त्वया ते दैव मानवाः ॥ १४ ॥
(विमृश्य) भद्रे, किं भवतीमूल्यम् ।

(सुतारा सबाष्पमधोमुखी भवति)

**द्विजः**—(राजानं प्रति) महाभाग, किं मूल्यमस्याः ।

**राजा**—(बाष्पनिरुद्धकंठः क्षणं तूष्णीमास्ते । पुनर्विमृश्य) आर्य, देशांतरिणो वयम् । नात्रत्यभृतकानां मूल्यमवधारयामः । ततस्त्वमेव समुचितं मूल्यं किमपि प्रयच्छ । (इत्युक्त्वा सबाष्पमधोमुखो भवति)

**द्विजः**—सुवर्णसहस्रपंचकम् ।

**राजा**—अस्तु तर्हि ।

**द्विजः**—अप्रतिषिद्धमनुमतम् । ततो गृहाणेदं कनकम् ।

(राजा लज्जया पाणिं प्रगुणयति । द्विजो राज्ञो वस्त्रांचले स्वयमेव कनकं बध्नाति)

**राजा**—(कथं कथमपि बाष्पं निरुध्य) आर्य द्विगुणेन कनकेनास्याः पुनर्विमोक्षः ।

**द्विजः**—आवश्यकमेतत् । (पुनः सुतारां प्रति) भृतके अग्रतोभव ।

(सुतारा मंदं मंदं रुदती परिक्रामति)

रोहिताश्वः—अंब[1], अहंपि आगमिस्सं ।

सुतारा—(सबाष्पम्) पुत्तय[2], तावत्तं तुमं तायस्स पासे चिट्ठ जाव अहं तुह मोअगं आणेमि ।

रोहिताश्वः—[3]अंब, तएसह आगमिस्सं ।

द्विजः—(सरोषम्) भृतके, कोऽयं कालविलंबः । सत्वरमग्रतो भव ।

(सुतारा सभयं परिक्रामति । रोहिताश्वो रुदन् वस्त्रांचलमालंबते । द्विजः सरोषं रोहिताश्वं करतलेनाहत्य पातयति । सुतारा तारस्वरं रोदिति । रोहिताश्वः पुनरुत्थाय वस्त्रांचलमालंबते । द्विजः पुनः पादेनाहत्य पातयति)

राजा—(विलोकयितुमक्षमः पाणिभ्यां लोचने पिधाय क्षणमास्ते । पुनः सदैन्यम्) आर्य, नायं बालको मातरं विना तिष्ठति । ततो वेतनं किमप्येतदीयं प्रयच्छ । अयमपि युष्मद्वेश्मनि किमपि कर्म करिष्यति ।

द्विजः—(सरोषम्) अहमेनं कर्मविघातकारिणं मुधापि न गृह्णामि ।

सुतारा—(सबाष्पम्) [4]अज्ज, पसायं करिय एयंपि गिण्ह । एइणाविणा फुट्टइ हिययं मे ।

द्विजः—(विमृश्य) एतस्यापि सुवर्णसहस्रं मूल्यमस्तु ।

राजा—अस्तु ।

द्विजः—(सुवर्णं समर्प्य सुतारां प्रति) भृतके, अग्रतो भव ।

(सुतारा सरोहिताश्वा मंदं मंदं द्विजेन सह रुदती निष्क्रांता)

राजा—दूरक्षणीयमिदं सुवर्णम् । ततो कुलपतिरिदानीमेवागत्य यदि कलयति तदा समीचीनं भवति ।

(ततः प्रविशति कुलपतिः । अंगारमुखश्च)

कुलपतिः—(सरोषं पराङ्मुखो भूत्वा) अरे प्रतिज्ञाभ्रष्ट अदृश्यमुख, उपनय वंचनाकनकम् ।

राजा—(विलोक्य सुप्रमोदम्) कथं प्राप्त एव कुलपतिः । (पुनः प्रणम्य) भगवन्, कियदपि कनकं गृहाण ।

---

१ अंब, अहमप्यागमिष्यामि. २ पुत्रक, तावत् त्वं तातस्य पार्श्वे तिष्ठ यावदहं तव मोदकमानयामि. ३ अंब, त्वया सहागमिष्यामि. ४ आर्य, प्रसादं कृत्वैतमपि गृहाण । एतेन विना स्फुटति हृदयं मे.

**कुलपतिः**—(सरोषम्) तिष्ठतु कनकं ग्रहीष्यामो वयम् ।

**राजा**—भगवन्, न नाम मे कश्चिदाशयदोषः । दयितासुतौ विक्रीय यावत्कनकं प्राप्तं तावदुपनीतम् ।

**अंगारमुखः**—अये त्रैशंकव, किममुना कुत्सितकुटुंबविक्रयेण । प्रार्थय चंद्रशेखरमत्र भूपतिम् । येनायमेकहेलयैव कनकलक्षं प्रयच्छति ।

**राजा**—किमेवमभिदधासि । हरिश्चंद्रः खल्वहं न नाम शतशः पराभूतान् प्रत्यर्थिनः प्राणात्ययेऽपि प्रार्थये ।

अपकृत्यापकार्येषु ये भवंत्यर्थिनः पुनः ।
तेषु मन्ये मनुष्यत्वं विधिवार्द्धकविक्रिया ॥ १५ ॥

**कुलपतिः**—अरे नीच, अस्मत्कनकदानसमये महत्त्वकारं नाटयसि ।

**राजा**—मुनींद्र, मा कुपस्तुभ्यं लभ्यं यच्छामि कांचनम् ।
विधाय निर्विषादस्य निषादस्यापि दास्यताम् ॥ १६ ॥

(ततः प्रविशति कौपीनमात्रपरिधानः कपिललंबकेशः करवलितयष्टिर्वृद्धो निषादः)

**निषादः**—(विलोक्य राजानं प्रति) [1]अले, मत्थयनिहिददब्भपूले के तुमं । किं कंमकरे आदु अवलो कोवि ।

**राजा**—कर्मकरोस्मि ।

**निषादः**—[2]किं कम्मं कलिस्ससि ।

**राजा**—(दिशो विलोक्य स्वगतम्) अस्ताभिमुखो गभस्तिमान् । अतिक्रांता क्रयिकालापवेला । अनुपलक्षितो नगरेषु निशि निवासं न लभते । विलंबमसहिष्णुश्च तापसः । तदहमिदानीं श्वपाकस्यापि कर्म करोमि । (प्रकाशम्) करिष्यामि ते कर्म ।

**कुलपतिः**— (अपवार्य सरोमांचम्) महासत्त्वचूडामणे, नमस्ते ।

**निषादः**—[3]भागीरथीदक्खिणमसाणाहिवइ कालदंडाभिहाणे चं-

---

१ अरे, मस्तकनिहितदर्भपूल कस्त्वं । किं कर्मकरः अथवा अपरः कोपि. २ किं कर्म करिष्यसि. ३ भागीरथीदक्षिणश्मशानाधिपतिः कालदंडाभिधानश्चंडालोऽहम् । श्मशाने यदुत्पद्यते तस्यार्धं राजा गृह्णाति । अपरस्यार्धस्यैको भागो ममको भागस्तव.

डाले हगो । मसाणो जं उपज्जत्ति तस्स अद्धं राया गिण्हाहि । अवलस्स अद्धस्स एगो भाउ मह एगो भाउ तुह ।

राजा—एवमस्तु ।

अंगारमुखः—(अपवार्य सरोमांचम्) अवितथवचनाय नमो भगवते पाकशासनाय ।

निषादः—[1]अये, किं कम्म करिस्सदि ।

राजा—यदादिशसि ।

निषादः—[2]अले, अद्धदद्धाइं चियाहिंतो दारुणि कट्टियव्वाइं । मइगसरीराउ अच्छायणवत्थं गिहीयव्वं मसाणं रखियव्वं अंनंपि जं लाया भणेइ तं कायव्वं ।

राजा—त्वं स्वामी श्वपचासि मे परमतः सोहं पुनर्वेतन-
क्रीतस्ते भृतकस्ततः किमपि यद्ब्रूषे करोम्येष तत् ।
अर्धप्लुष्टमपाहरामि चितितः काष्ठं शवस्योर्ध्वतो
हृत्वाच्छादनमादधामि परितो रक्षा श्मशानस्य च ॥१७॥

निषादः—(कुलपतिं प्रति) [3]तापसा एसे मे कम्मकले इत्थ तुमं सक्खी ।

राजा—अस्मदीयवेतनं कुलपतये दातव्यम् ।

निषादः—एवं [4]कलिस्सं ।

कुलपतिः—(अंगारमुखस्य कर्णे) एवमेवम् ।

अंगारमुखः—(अपवार्य) यदि मया मांत्रिकेण भाव्यं तर्हि त्वया राजकुमारेण भवितव्यम् ।

निषादः—अले, [5]अग्गउ भव ।

अंगारमुखः—(सविचिकित्सं राजानं प्रति)
त्वामात्मान्वयजातमेष भगवांस्तेजस्विनामग्रणीः
कुर्वाणं प्रविलोक्य कुत्सिततमं चंडालदास्यं मुहुः ।

---

१ अये, किं कर्म करिष्यसि. २ अरे, अर्धदग्धानि चिताभ्यो दारूणि कर्षयितव्यानि । मृतशरीरादाच्छादनवस्त्रं ग्रहीतव्यम् । श्मशानं रक्षितव्यम् । अन्यदपि यद्राजा भणति तत् कर्तव्यम्. ३ तापस एष मे कर्मकरोऽत्र त्वं साक्षी. ४ एवं करिष्यामि. ५ अरे अग्रतो भव.

मातंगप्रणयादिव प्रतिवहन् म्लानायमाने वपुः
स्नातुं गच्छति पश्चिमस्य तरणिर्मध्येजलं वारिधेः ॥१८॥

राजा—मुनींद्र, किमभिदधासि ।

उपादेयं हेयं किमथ सफलं निष्फलमहो
परामर्शोनेवं विदधति यदृच्छादृतधियः ।
प्रतिज्ञानिर्वाहव्रतनिगडितस्वांतगतयः
पुनः कृत्याकृत्यस्फुरदुरुविकल्पेषु कृपणाः ॥ १९ ॥

तद्गच्छत यूयं कनकमिदमादाय । अहमपि निषादपतिना सह व्रजामि ।

(इति निष्क्रान्ताः सर्वे)

तृतीयोऽङ्कः समाप्तः ॥

---

# चतुर्थोऽङ्कः ।

(ततः प्रविशति सिंहलकेम निर्दिश्यमानमार्गोऽमात्यः सत्यवसुः । शुकपंजर-हस्तः पुरुषश्च)

**सत्यवसुः**—सिंहलक, किमद्य प्रभात एवास्मानाकारयति देवः।

**सिंहलकः**—किमपि पर्यालोचयितुम् ।

**सत्यवसुः**—अरे पुरुष, क्व भवानेवं विहंगराजमाप्तवान् ।

**पुरुषः**—[1]चंपापुरीवणे एस एगागी पढंतो मए सुणिदो । तदो धरीय चंदसेहरणिमित्तमाणिदो ।

**सत्यवसुः**—सिंहलक, क्व सांप्रतं देवः ।

**सिंहलकः**—एष पुरः सौधोपवने ।

(ततः प्रविशति राजा चंद्रशेखरः । सुनंदप्रभृतिकश्च परिवारः)

**राजा**—सुनंद, पूर्वं मांत्रिकः क्वासीत् ।

**सुनंदः**—देव, पूर्वमुज्जयन्यामासीत् । सांप्रतं पुनरिहायातः ।

**सत्यवसुः**—(पुरुषं प्रति) यावदहं भवंतमाकारयामि तावत्त्वयात्रैव स्थातव्यम् ।

**सिंहलकः**—(उपसृत्य) देव, अमात्यः प्रणमति ।

(सत्यवसुः प्रणम्योपविशति)

**राजा**—(सकरुणमिव) अमात्य ।

पौराः कर्मसु धार्मिकेषु निरता वर्णाश्रमाः श्रेयसीं
तन्वंति स्थितिमुज्ज्वलौजसि वयं वर्तामहे वर्त्मनि ।
संहारं प्रतिमंदिरं प्रतिपथं प्रत्यापणं कुर्वती
सेयं मारिरुपस्थिता तनुमतां कस्मादकस्मात्पुरि ॥ १ ॥

**प्रतीहारः**—(प्रविश्य) देव, लंबस्तनी कुट्टिनी द्वारि वर्तते ।

**सत्यवसुः**—(सरोषमिव) अनवसर इदानीं परप्रवेशस्य ।

(नेपथ्ये) हा सव्वंगसुंदरि हा पुत्ति अणंगलेहे, कहं तुह वयणं मंदभाइणी पुणोवि पेक्खिस्सं ।

---

१ चंपापुरीवन एष एकाकी पठन् मया श्रुतः । ततो धृत्वा चंद्रशेखरनिमित्तमानीतः. २ हा सर्वांगसुंदरि हा पुत्रि अनंगलेखे, कथं तव वदनं मंदभागिनी पुनरपि द्रक्ष्यामि.

**राजा**—मंजरक, कोऽयं प्रलपति ।

**प्रतीहारः**—देव, लंबस्तनी प्रलपति ।

**राजा**—व्यक्तमकालमरणाकुला किमपि विज्ञपयितुकामेयम् । प्रविशतु वराकी । मंजरक, शीघ्रं प्रवेशय ।

(प्रतीहारो निष्क्रांतः)

(ततः प्रविशति संभ्रमप्रसूतप्रभूतश्वासद्विगुणतरमेदुरोदरा लंबस्तनी)

**लंबस्तनी**—[1]भट्टा, मुसिदह्मि । परित्ताहि परित्ताहि ।

**राजा**—विश्रब्धमभिधीयताम् । केन मुषितासि ।

**लंबस्तनी**—(सोरस्ताडम्) [2]हयासेण दिव्वेण ।

**राजा**—कथमिव ।

**लंबस्तनी**—[3]मह पुत्ती अणंगलेहा भुअंगेण सह रत्तिं सुहं कीलिअ पसुत्ता । अह पभाअसमयंम्मि रोगं विणा विवन्ना चिट्ठइ । अवरोवि लोगो एवं अकाले विवज्जदि ।

**राजा**—अमात्य, अत्यंतमरिष्टम् ।

**लंबस्तनी**—(सरोषम्) [4]भट्टा, अनीइकारि तुमं । तउ एव अयालमरणं लोआणं ।

**सत्यवसुः**—(सरोषम्) अहो निर्लज्जता अहो कर्कशभाषित्वमस्याः ।

**राजा**—प्रकृत्यैव निर्लज्जा कर्कशभाषिणी चेयं । सांप्रतं पुनरार्ता च । ततोस्या वचोभिर्न कोपितव्यम् । किंत्वधुनाऽकालमरणनिवारणोपायश्चिंतनीयः ।

**सत्यवसुः**—देव, अत्रार्थे मांत्रिकाः प्रगल्भंते ।

**राजा**—उज्जयनीतः समायातोऽस्ति मांत्रिकः ।

**सत्यवसुः**—समाहूयतां मांत्रिकस्तर्हि ।

**राजा**—सुनंद मांत्रिकं सत्वरमाकारय ।

---

१ भर्तः, मुषितास्मि । परित्रायस्व परित्रायस्व. २ हताशेन दैवेन. ३ मम पुत्र्यनंगलेखा भुजंगेन सह रात्रिं सुखं क्रीडित्वा प्रसुप्ता । अथ प्रभातसमये रोगं विना विपन्ना तिष्ठति । अपरोऽपि लोक एवमकाले विपद्यते. ४ भर्तः, अनीतिकारी त्वम् । तदैवाकालमरणं लोकानाम्.

(सुनंदो निष्क्रांतः)

**मांत्रिकः**—(प्रविश्य) स्वस्ति महाराजाय।

**राजा**—(सरभसम्) इदमासनमास्यताम्।

(मांत्रिक उपविशति)

**सत्यवसुः**—मांत्रिक, वाराणसीलोकस्याकांडमृत्युः समुपस्थितः।

**मांत्रिकः**—(क्षणं ध्यानं नाटयित्वा) हुं ज्ञातम्। राक्षसीललितमिदम्।

**लंबस्तनी**—[1](सबाष्पम्) मंतिअ, इयाणिं ज्जेव मह पुत्ती विवण्णा।

**मांत्रिकः**—अनलसंस्कारो जातो न वा।

**लंबस्तनी**—[2]अज्जवि अग्गिसक्कारो न कीरदि।

**मांत्रिकः**—(साहंकारम्) तर्हि तां जीवयिष्यामि।

**राजा**—(साश्चर्यम्) मांत्रिक, प्रभवसि राक्षसीमत्रानेतुम्।

**मांत्रिकः**—(साक्षेपम्) किमेवमभिधीयते महाराजेन।

लक्ष्मीं श्रीपतिवक्षसः कमलभूवक्त्रोदराद्भारतीं
सूर्याचंद्रमसौ च तारकपथात्पातालतो वासुकिम्।
सार्द्धं मातलिहस्तिमल्लसुमनःकल्पद्रुदंभोलिभिः
कर्षामि त्रिदशालयाद्बलभिदं मंत्रेण तंत्रेण वा॥ २॥

यदि कुतूहलं तदा प्रगुणय रक्तचंदनकरवीरकुसुमलवणसर्षपानलादिकां मंडलसामग्रीम्। उपनयताकृष्टकरालकरवालहस्तानष्टौ महावीरान्। येन तां राक्षसीमाकर्षामि।

**राजा**—(सकौतुकम्) सिंहलक, सर्वं सत्वरमुपनय।

(सिंहलको निष्क्रम्याष्टभिः पुरुषैः सह सामग्रीभृतपटलकहस्तः प्रविशति)

**राजा**—मांत्रिक, सर्वं प्रगुणमेव तदारभ्यतां मंडलविधिः।

**मांत्रिकः**—(नाट्येन मंडलविधिमादाय) भो भो महावीराः, सावधानैरचकितहृदयैराकृष्टकरवालैरष्टसु दिक्षु स्थातव्यम्।

**पुरुषाः**—यदादिशति मांत्रिकः।

---

१ मांत्रिक, इदानीमेव मम पुत्री विपन्ना. २ अद्याप्यग्निसंस्कारो न क्रियते.

**मांत्रिकः**—(मंडलमध्ये स्थित्वा उच्चैःस्वरम्)

ॐ ह्रीं ह्रां बलविद्विषो भगवतः स्वाहा वषट् वह्नये
वौषट् प्रेतकुलेश्वरस्य सततं क्रव्यादभर्त्रे वषट् ।
ऐं ह्रीं पाशभृतः स्वधा मुरजिते श्रीदस्य चेशस्य च
क्लीं श्रीं पुष्पवतोर्भुजंगमपतेर्हुं फट् ग्रहाणां च हुं ॥ ३ ॥

(नेपथ्ये कलकलः)

रे रे रक्षांसि वीक्ष्य क्वचिदपि किमपि ग्रासलेशं ददध्वं
विध्वस्ताशेषशक्तिः क्षणमपि चलितुं नाहमस्मि सहिष्णुः ।
उग्रक्षुत्क्षामकुक्षेर्जठरशिखिशिखादह्यमानांत्रवल्लयाः
सौहित्यं मे विधातुं त्रिभुवनजनताप्यद्य नालंभविष्णुः ॥४॥

**मांत्रिकः**—भो भो, भवद्भिः सर्वैरप्यकुतोभयैर्भाव्यम् ।

(सर्वे सभयकौतुकमूर्ध्वमवलोकयंति)

(ततः प्रविशति लंबमानकेशा कृतावगुंठना गगनादवतरणं नाटयंती युवतिः । सर्वे सभयकौतुकमवलोकयंति)

**राजा**—अमात्य, सोऽयं मंत्राणां परः प्रकर्षः ।

**मांत्रिकः**—महाराज, सेयं राक्षसी वाराणसीलोकं संहरति ।

**लंबस्तनी**—(सरोषम्) [1]भट्टा, एअं रक्खसिं अहं सहत्थेण मारइस्सं ।

**मांत्रिकः**—किमर्थम् ।

**लंबस्तनी**—[2]एआए मह पुत्ती मारिआ ।

**मांत्रिकः**—अलीकमभिदधासि । जीवति ते पुत्री ।

**वामना चेटी**—(प्रविश्य) [3]अज्जए, दिट्ठिआ गिहीदजीविआ भट्टिणी अणंगलेहा ।

(लंबस्तनी सहर्षं नृत्यति)

**राजा**—अमात्य, अनंगलेखां जीवयिष्यामीति प्रतिज्ञा मांत्रिकेण निर्व्यूढा । अहो सत्यप्रत्ययो मंत्रविधिः ।

---

१ भर्तः, एतां राक्षसीमहं स्वहस्तेन मारयिष्यामि. २ एतया मम पुत्री मारिता. ३ आर्ये, दिष्ट्या प्राप्तजीविता भट्टिनी अनंगलेखा.

लंबस्तनी—भट्टा, जइ मे बालकालपहुदि अखंडिअमसइत्तणं ता तुमं चिरं नंद[1] ।

मांत्रिकः—महाराज, कृतमस्माभिरात्मकरणीयम् । दंडकर्मणि पुनर्महाराजः प्रमाणम् ।

राजा—(विमृश्य) अमात्य, श्वपाकमाकारय ।

सत्यवसुः—कोऽत्र भो अस्मत्परिजनेषु ।

(शुकपंजरहस्तः पुरुषः प्रविशति)

पुरुषः—एसो[2] अह्मि ।

सत्यवसुः—(पुरुषस्य कर्णे) एवमेवम् ।

(पुरुषः पंजरं विमुच्य निष्क्रांतः)

शुकः—स्वस्ति महाराजाय ।

राजा—(सकौतुकम्) अमात्य, किमिदम् ।

सत्यवसुः—देव, सर्वकलाकुशलः शुकोऽयम् । (पुनः शुकं प्रति) विहंगमराज, राजानमुपश्लोकय ।

शुकः—अमात्य, राजानमुपश्लोकयामि ।

सत्यवसुः—अथ किम् ।

शुकः—

दर्पाध्मातविरोधिभूपतिभुजाकंडूभिषङ्मार्गणो
देवः काशिमहीपतिः कलयतु श्रेयांसि तेजांसि च ।
यात्रां यस्य मदांधकुंजरघटाघंटाटणत्कारिणः
काष्ठांताः प्रतिराजवेश्मसु पुरः शंसंति पश्चाचराः ॥ ५ ॥

राजा—(सकौतुकम्) विहंगमराज, किमधीतवानसि ।

शुकः—

व्याकरणेऽहमधीती पठिती चाणक्यभरतकाव्येषु ।
आम्नाती श्रुतितर्कस्मृतिगणितपुराणशास्त्रेषु ॥ ६ ॥

राजा—(विहस्य) विहंगमराज, निःशेषवेश्याचक्रचक्रवर्तिनीमेतां लंबस्तनीमुपश्लोकय ।

---

१ भर्तः, यदि मे बालकालप्रभृत्यखंडितमसतीत्वं तदा त्वं चिरं नंद.
२ एषोऽस्मि.

**शुकः**—

पुण्यप्रागल्भ्यलभ्याय वेश्यापण्याय मंगलम् ।
यत्र प्रतीपाः शास्त्रस्य कामादर्थप्रसूतयः ॥ ७ ॥

(सर्वे हसंति)

**मांत्रिकः**—(सरोषम्) महाराज, कोऽयमस्य वराकस्य शुकपक्षिणः प्रलापेषु हास्यप्रयासः । ननु हास्यरसावेशभरविवशचेतसां भवतामपीयं राक्षसी प्रभविष्यति ।

**राजा**—(सभयम्) अमात्य, किमद्यापि विलंबते श्वपाकः ।

(ततः प्रविशति कालदंडो हरिश्चंद्रश्च)

**कालदंडः**—(प्रणम्य) अमच्च[1], एसे चिट्ठामि ।

**शुकः**—भरतवंश्यावचूडाय महाराजाय हरिश्चंद्राय स्वस्ति ।

**राजा**—(सरोषमिव) सांप्रतं विहंगोऽसंबद्धं व्यावहरति । कुतोनामाऽत्र साकेतपतिः ।

**सत्यवसुः**—अरे मृतप, राक्षसीमेनामपगतावगुंठनां कुरु ।

**कालदंडः**—अरे[2] कम्मकला, लक्खसिं उघाडेदि ।

**हरिश्चंद्रः**—(युवतिं विगतावगुंठनां कृत्वा सखेदमात्मगतम्) कथमियं देवी सुतारा । अतः परमपि दुखांतरमुपस्थितम् । आः पाप विधे, कोयं त्वया क्षते क्षारनिक्षेपः कृतः । (पुनः सावष्टंभम्)

मुनिभ्यः संसृष्टा चतुरुदधिकांची वसुमतो
ऋणार्थे विक्रीता ससुतदयितात्मा सुभृतकः ।
कृतश्चंडालानां विधिरथ दिशेद्दुःखमपरं
हरिश्चंद्रः सोऽहं तदपि परिसोढास्मि नियतम् ॥ ८ ॥

(विमृश्य) नाऽत्र कर्मणि देवी कारणम् । तदहमात्मानमग्नौ निक्षिप्य देव्या व्यलीकमपहरामि । यदि वा नाऽयं समयो राजसदसि स्वरूपप्रकाशनस्य । अपि च निषादाधीनोऽहं यदेवायमादिशति तदेव कर्तुमर्हामि ।

**राजा**—(विलोक्य साश्चर्यम्) अमात्य, पश्य पश्य बाह्यनेपथ्यैरकदर्थितो युवतेरंगसंनिवेशः ।

---

१ अमात्य, एष तिष्ठामि. २ अरे कर्मकर, राक्षसीमुद्घाटय.

वक्त्रं चंद्रविलासमंबुजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीं जिष्णुः कचानां चयः ।
वक्षोजाविभकुंभविभ्रमहरौ गुर्वी नितंबस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मंडनम् ॥ ९ ॥

शुकः—सतीचक्रचूडामणे उशीनरमहाराजपुत्रि सुतारे देवि, नमस्तुभ्यम् ।

राजा—(सरोषम्) अरे विहंगमाधम, किमिदं पुनः पुनरसंबद्धमभिदधासि ।

शुकः—(सावष्टंभम्) महाराज, प्रलयेऽपि न किमप्यसंबद्धमभिदधामि । नन्वयं साकेतनाथो हरिश्चंद्रः । इयं चास्य सहधर्मचारिणी देवी सुतारा ।

राजा—(हरिश्चंद्रं प्रति) अरे निषादभृतक, हरिश्चंद्रो भवान् । इयं ते पत्नी च सुतारा । (युवतीं प्रति) भद्रे, हरिश्चंद्रपत्नी भवती ।

हरिश्चंद्रः—(स्वगतम्) प्रतिपंथिनोऽस्य पुरतः सांप्रतमात्मप्रकाशनं दैन्यमावहति । (प्रकाशम्) महाराज, नाहं साकेतपतिः किंतु देशांतरादागतो बाल्यप्रभृति दारिद्र्योपहतो निषादस्य भृतकः ।

युवतिः—(स्वगतम्) [1]अहं पि अत्ताणं न पकासइस्सं । जं भोइ तं भोउ (प्रकाशम्) [2]महाराज, नाहं सुतारा किंतु वज्जहिययस्स बंभणस्स दासी ।

राजा—(सरोषम्) अरे विहंगमापसद, किमिदम् ।

मांत्रिकः—अबुद्धिपूर्वं शुकाः पठंतीति भवता किं न श्रुतम् ।

शुकः—(सखेदम्)
यः परप्रीतिमाधातुं भस्मतामपि गच्छति ।
विवेकमानिना पश्य धात्रा सोऽप्यगुरुः कृतः ॥ १० ॥

राजा—अरे विहंगम, व्यक्तमावेदय ।

शुकः—देव, हरिश्चंद्रोऽयम् । अमुना पृथ्वी कनकलक्षाधिका

---

१ अहमप्यात्मानं न प्रकाशयिष्यामि । यद्भवति तद् भवतु. २ महाराज नाहं सुतारा किंतु वज्रहृदयस्य ब्राह्मणस्य दासी.

तापसाय प्रदत्ता । अपूर्णायां कनकलक्ष्मायां तापसेनायमियतीमवस्थां लंभितः । इयं चास्य पत्नी सुतारादेवी ।

राजा—(सविनयं हरिश्चंद्रं प्रति) महाभाग, वसुमती त्वया तापसाय वितीर्णा ।

हरिश्चंद्रः—देव, विज्ञप्तं मया नाहं साकेतपतिः ।

राजा—अरे शुकाधम, पुनरस्मान् विप्लावयसि ।

शुकः—देव, महासत्त्वचूडामणिरयं किमात्मानमुपस्तौति ।

सतो वाप्यसतो वापि स्वान् स्वयं कीर्तयन् गुणान् ।
ब्रह्माऽपि हास्यतां याति किमन्यः प्राकृतो जनः ॥ ११ ॥

राजा—(विमृश्य युवतिं प्रति) भद्रे,

वक्त्रं पात्रं लवणमधुनः पद्महृद्यौ च पाणी
वाणी स्वादुश्चकितहरिणीहारिणी नेत्रपद्मे ।
वद्ये लज्जा स्थितिरविकृतिर्भूरि सत्त्वं महत्त्वं
तत्त्वं तत्त्वं कथय ननु नः कासि कस्यासि पत्नी ॥१२॥

युवतिः—(सलज्जम्) महाराय, कधियं मए। अहं वज्जहिअयस्स बंभणस्स दासी ।[1]

शुकः—देव, अयं हरिश्चंद्रः । सेयमस्य पत्नी सुतारा अमुमर्थं ब्रह्मापि न विघटयति ।

राजा—(हरिश्चंद्रं प्रति) महाभाग, मा भैषीः । सत्यमावेदय । यदि नाम वयं द्वेषिणस्तथापि संजातविपदो भवतस्त्रातारः । ततः प्रकटयात्मानम् । प्रार्थयस्व किमप्यभिलषितम् ।

हरिश्चंद्रः—(स्वगतम्) हरिश्चंद्रः खल्वहं प्राणात्ययेऽपि न प्रतिपंथिनमर्थये । दैव्यास्तु यद्भाव्यं तद्भवतु । (प्रकाशम्) किमप्यस्य पक्षिणो वचसा पुनः पुनरात्मानमायासयति देवः । विज्ञप्तं मया देवाग्रे निषादभृतकोऽहम् ।

राजा— अरे कालदंड, कोऽयम् ।

कालदंडः—(सभयम्) भट्टा, एसे मे कम्मकले ।[2]

---

१ महाराज, कथितं मया । अहं वज्रहृदयस्य ब्राह्मणस्य दासी. २ भर्तः, एष मे कर्मकरः.

मांत्रिकः—(सरोषम्) पक्षिणां वचोभिर्दिव्यदृष्टयो मांत्रिका व्यर्थी क्रियंते । अहो बुद्धिकौशलम् ।

सत्यवसुः—(अपवार्य) नास्यामाकृतौ राक्षसीकर्म संभवति । शुकश्चायं बहुदृश्वा च । ततो देवेन किमपि विमृश्याचरणीयम् । व्यक्तमिदं मांत्रिकस्य विजृंभितम् ।

राजा—अमात्य दृष्टप्रत्ययो मांत्रिकः । निषादभृतकश्चायं न शुकवचनमनुमन्यते । ततो वयं शुकप्रत्ययं कथमालंबामहे ।

मांत्रिकः—(सरोषम्) यदि राक्षसीदंडमाधातुमनलं महाराजस्तर्हि व्रजामो वयम् ।

राजा—(विमृश्य) अरे कालदंड, न स्त्रियो वधमर्हंति । अतस्त्वमेवैनां राक्षसीं गर्दभारूढां पुरपथिषु भ्रमयित्वा निर्विषयां कुरु ।

हरिश्चंद्रः—(सखेदमात्मगतम्)

क तद्वृत्तं देव्याः शिबिनृपतिवंशार्णवभुवः
क वायं व्याहारस्तरणिकुललज्जाक्षयकरः ।
न यो वाचः पात्रं न भवति दृशोर्नापि मनस-
स्तमप्यर्थं क्रुद्धो हतविधिरकांडे घटयति ॥ १३ ॥

कालदंडः—अले कम्मकला, गडुअ रासभं आणिहि[1] ।

हरिश्चंद्रः—यदादिशति स्वामी । (इत्यभिधाय निष्क्रम्य सरासभः प्रविशति)

कालदंडः—अले लासभे, एदं लक्खसिं आलोयह[2] ।

( हरिश्चंद्रः सबाष्पकंठो युवतिं रासभमारोहयति । युवतिर्मंदं मंदं रोदिति )

शुकः—(तारस्वरम्) अहो अकृत्याचरणमकृत्याचरणम् ।

सत्यवसुः—देव, अपर्यालोचितमिदं कर्म ।

राजा—सप्रत्ययेऽपि कर्मणि कः पर्यालोचः ।

शुकः—एवं प्रत्ययमवलोकयतु देवः ।

राजा—कः प्रत्ययः ।

शुकः—अहं तु जातवेदसि प्रविश्य सुतारापवादमपहरामि ।

---

१ अरे कर्मकर, गत्वा रासभमानय. २ अरे रासभे, एतां राक्षसीमारोहय.

राजा—भवत्वेवम् । कोऽत्र भोः । उपनयतु रे अग्निं काष्ठानि च ।

(प्रविश्य पुरुषः सर्वमुपनयति)

शुकः—अमात्य, मां पंजराद्विमोचय ।

(सत्यवसुः पंजरमुद्धाटयति । सर्वे कौतुकमवलोकयंति ।)

शुकः—(चितायाः पुरो भूत्वा दक्षिणं भुजमुत्क्षिप्य)

जंभारिप्रमुखाः क्षणं शृणुत मे हंहो दिशां नायकाः
क्रव्यादान्वयसंभवा किल भवेत्सेयं मृगाक्षी यदि ।
भाभिः पिंजरयंस्तरूनविरलज्वालाकरालाकृति-
र्वाचालं दहतु प्रसह्य भगवान् मां जातवेदास्तदा ॥ १४ ॥

(चितामारोहयति)

सर्वे—(सकौतुकम्) कथं विध्मातो जातवेदाः । अक्षतांगः शुकः ।

अमात्य—(अपवार्य) देव, व्यक्तमस्य मांत्रिकस्य विजृंभितम् । तदयमर्थो विस्तरेण विज्ञातव्योऽस्ति । सांप्रतं पुनरयं मांत्रिको व्याजांतरेण विसृज्यते ।

राजा—रे कालदंड, युवतिमेतां रासभादवतार्य विसर्जय । लंबस्तनि स्ववासमनुसर । अमात्य विहंगमराजं पंजरे नियोजय । (मांत्रिकं प्रति) पुनरप्ययमर्थः पराह्णे पर्यालोचयिष्यते । सांप्रतं व्रजत यूयम् । वयमपि करणीयांतरमनुतिष्ठामः ।

(इति निष्क्रांताः सर्वे)

चतुर्थोऽङ्कः समाप्तः ॥

# पंचमोऽङ्कः ।

(नेपथ्ये) अरे कंम्मकला, मसाणे गडुअ चिठ्ठ । लक्खसीपउअणेण पुणोवि लाया तुमं हक्कालिस्सइ ।[1]

(ततः प्रविशति हरिश्चंद्रः)

**हरिश्चंद्रः**—कथमयं स्वामी मां श्मशाने व्यापारयति । एष त्वरिततरं व्रजामि । (इत्यभिधाय परिक्रामति । ऊर्ध्वमवलोक्य) अस्ताभिमुखो गभस्तिमान् ।

(नेपथ्ये । सकरुणम्) हा अज्जउत्त, हा तिहुअणिक्कलकी, ईदिसी दे अवत्था जाया । नहि कोऽपि अह्माणं दाणि सरणं ।[2]

**हरिश्चंद्रः**—(साशंकम्)

पदं प्रायः प्रेताधिपतिमुखितानां पितृवनं
धुनीरोधोबंधः पुनरयमपात्रं शिवविधेः ।
स्मरंती त्रातारं तदिह तरुणी कापि करुणं
कथंकारं तारं प्रति मुहुरियं रोदिति तटे ॥ १ ॥

(ततः प्रविशति सर्वांगीणभूषणा यौवनारंभविशेषोन्मिषितलावण्यनैपुण्यपुण्यतनुयष्टिर्वनिता)

**वनिता**—हा दिठ्ठ निक्करुण, को एस तए अह्माणं वज्जनिवाउ दंसिउ ।[3]

**हरिश्चंद्रः**—(विलोक्य)

जंघालैर्मृगनाभिजैः परिमलैरुन्निद्रयंती कुलं
भृंगाणां परितः प्रसाधनरुचा संचूरयंती तमः ।
उन्मीलन्नवयौवनांचितवपुः शृंगारताररच्छविः
कस्येयं वनिता कथं च रजनावेकाकिनी रोदिति ॥ २ ॥

**वनिता**—हा निक्करुणे विद्याहरि, रठ्ठसिरीतिलयं मह दयियं वावावयंतीए दे किं फलम् ।[4]

---

१ अरे कर्मकर, श्मशाने गत्वा तिष्ठ । राक्षसीप्रयोजनेन पुनरपि राजा त्वामाकारयिष्यति. २ हा आर्यपुत्र, हा त्रिभुवनैकलक्ष्मीः, ईदृशी तेऽवस्था जाता । न हि कोऽप्यस्माकमिदानीं शरणम्. ३ हा दिष्ट निष्करुण, क एष त्वयाऽस्माकं वज्रनिपातो दर्शितः. ४ हा निष्करुणे विद्याधरि, राष्ट्रश्रीतिलकं मम दयितं व्यापादयंत्यास्ते किं फलम्.

हरिश्चंद्रः—व्यक्तमियं व्यापाद्यमानभूपतेः कस्यापि दयिता । भवतु पृच्छामि तावत् । (उपसृत्य) भद्रे, का त्वं किमर्थं रोदिषि ।

वनिता—महाभाय मं मंदभाइणिं किं पुच्छसि । सयमेव अग्गउ भविअ जाणेहि अह्माणं अवत्थं ।

हरिश्चंद्रः—(पुरो विलोक्य साशंकम्)

ऊर्ध्वौ पादौ निबद्धावथ वदनमधः केशपाशः प्रलंबी
रक्तश्रीखंडचर्चा वपुषि च कुसुमैः पाटलैर्मुंडमाला ।
कापालं श्रोणिदाम ज्वलितहुतभुजस्त्रीणि कुंडानि पार्श्वे
न्यग्रोधस्कंधशाखाशिखरनियमितः कोऽयमग्रे मनुष्यः ॥ ३ ॥

(ततः प्रविशति यथानिर्दिष्टो रमणीयाकृतिस्तरुणपुरुषः)

पुरुषः—(निःश्वस्य) कष्टं भोः कष्टम् ।

सौधांकादुपहारलक्षणधुरं होमार्थमत्रानये-
द्यन्मां व्योमचरी तदस्तु पुरुषः सोहं सहिष्येऽखिलम् ।
एतां बालमृणालकोमलतनुं कांतां वराकीं लस-
त्त्रासाल्लोलविलोचनां हृतवती व्यर्थं किमर्थं तु सा ॥ ४ ॥

वनिता—(सकरुणं हरिश्चंद्रं प्रति) महाभाय, निरूविदा तए अवत्था ।

हरिश्चंद्रः—(स्वगतम्) निश्चितमियमस्य महात्मनो दयिता । (प्रकाशं पुरुषं प्रति) महाभाग, नायमवसरो वृत्तांतश्रवणस्य । तथापि तामिमां रमणीयतमामाकृतिं भवतो विलोक्य वृत्तांतं जिज्ञासुरस्मि । तदादिश । को भवान् किंनिबंधना चेयमवस्था दुःस्था ।

पुरुषः—(निशम्य) महापुरुष, महती ममेयं कथा श्रूयमाणापि कातरचेतसां महांतमातंकमावहति । न चानया कथितयापि कुतोऽपि परित्राणमस्यां च दुःस्थायामवस्थायाम् । आत्मनश्चरितमावेदितं केवलं दैन्यमेव प्रथयति । ततः किममुना ते वृत्तांतश्रवणव्यसनेन । अपसर त्वरितमस्मादपायस्थानात् ।

---

१ महाभाग, मां मंदभागिनीं किं पृच्छसि । स्वयमेवाग्रतो भूत्वा जानीह्यस्माकमवस्थाम्. २ महाभाग, निरूपिता त्वयाऽवस्था.

**वनिता**—अकारणवच्छलो कोऽपि एस महप्पा । तउ एअस्स पत्थणं संभवेदु अज्जउत्तो ।[1]

**पुरुषः**—महाभाग, शृणु तर्हि । चंद्रशेखरस्य काशिवसुंधराधिपतेर्महासेननामा राज्यार्हः कुमारोहम् । इदानीमेव चंद्रशालायामनया सह सुखं पर्यंकनिषण्णः कयापि खेचरवृंदपरिवृतया विद्याधरवनितयापहृत्याश्रमपदमिदमानीतः ।

**हरिश्चंद्रः**—अहो भयंकरश्चरितसंनिवेशः ।

**पुरुषः**—ततः परां च विधुरामवस्थां भवानपि पश्यति ।

**हरिश्चंद्रः**—किमर्थं पुनरिदमनार्यं कर्म विद्याधर्याः ।

**पुरुषः**—महामांसेन होमार्थम् ।

**हरिश्चंद्रः**—संप्रति विद्याधरी क्व वर्तते ।

**पुरुषः**—गंगास्रोतसि स्नातुं गतास्ति ।

**हरिश्चंद्रः**—(स्वगतम्)

दत्ता यन्मुनये मही भृतकतां नीतो निषादस्य च
स्वात्मायं किमनेन बाह्यवपुषा सत्यं च सत्त्वं च मे ।
प्राणैः स्वैर्यदि रक्षितुं पुनरिमैः प्राणानमुष्य क्षमा
तत्सत्येषु च सात्विकेषु च तदा काचित्पताका मम ॥ ५ ॥

अपि च । कतिपयदिनावशेषा मे भृतकभावाः । ततः स्वामिवंचनापि न काचित् । (प्रकाशम्)

कुमार,

न जातौ न जनिष्येते द्वाविमौ पुरुषौ भुवि ।
अर्थितो यः करोत्येव यश्च नार्थयते परम् ॥ ६ ॥

**पुरुषः**—ततः किम् ।

**हरिश्चंद्रः**—यदि प्रार्थनां विफलयसि न मे, तदा किमपि प्रार्थये ।

**पुरुषः**—(निःश्वस्य) महाभाग, विगतकोशपरिच्छदः सांप्रतमहं न प्रार्थनां समर्थयितुमलम् ।

---

१ अकारणवत्सलः कोप्येष महात्मा । तदैतस्य प्रार्थनां संभावयत्वार्यपुत्रः ।

हरिश्चंद्रः—यदेवाधातुमलंभविष्णुर्भवान् तदेवाहमर्थयिष्ये ।

पुरुषः—अभिधीयतां तर्हि ।

हरिश्चंद्रः—अनुभवतु राज्यसंपदं भवान् । अहमेव त्वयाधेयं कर्म व्योमचारिण्या विद्याधर्याः संपादयिष्यामि ।

पुरुषः—(सातंकम्) अहो श्रोतव्यमश्रोऽतव्यम् । महासत्त्व, किमेवमभिदधासि ।

स्वस्मिन् प्रेम यथा ममास्ति भवतोऽप्यस्त्येव सत्यं तथा
मृत्योर्भीरुरहं यथा त्वमपि च व्यक्तं महात्मंस्तथा ।
अस्त्येषा दयिता यथा मम तथा तेऽप्यस्ति काचित्ततः
स्वप्राणांस्तव जीवितेन हतकान् मे रक्षतः को नयः ॥ ७ ॥

हरिश्चंद्रः—महाभाग, आबाल्याद्दारिद्र्योपहतमनाः स्वयमेव मृत्युं स्पृहयालुरहम् । न मे भार्यापि बांधवास्तिष्ठंति ।

पुरुषः—महाभाग, इदमेव परोपकारव्यसनमावेदयति । न ते दारिद्र्यपंकपंकिलं वपुः । अपि च

तावत्कृतांतवदने गत एव सोहं
स्वैरी सुखी च स भवानकुतोभयश्च ।
यायावरं मम वपुस्तव शाश्वतेन
संरक्षतश्च वपुषा किल को विवेकः ॥ ८ ॥

हरिश्चंद्रः—

व्याध्याधिजर्जरजरामरणाभिताप-
पातैः कुतः कथय शाश्वतिकं वपुर्मे ।
प्रग्लास्नुना तदमुना भुवि संचरिष्णुः
कीर्तिं लभेय यदि को न ममाद्य लाभः ॥ ९ ॥

तद्विधेहि प्रसादम् । अनुगृहाण माम् । समर्थय प्रार्थनाम् । अर्थिमनोरथसमर्थनबंधना हि महात्मनां प्रवृत्तयः ।

पुरुषः—(साश्चर्यं विमृश्य)

प्राणत्राणकृते ममैवमधुना प्राणान् निजान् संत्यज-
न्वीराग्रेसर गाढवानसि महासत्त्वोचितामौचितीम् ।

तत्त्वं सात्त्विकचंद्र मुंच सपदि क्लेशावहां क्ष्मामिमा-
मात्मानं विनिमोचयंस्तु परतो लज्जे ननु क्षत्रियः ॥ १० ॥

**हरिश्चंद्रः**—सात्त्विककुमार, यत एव क्षत्रियोऽसि तत एव नार्थिजनमनोरथं व्यर्थयितुमर्हसि । ततः प्रसीद समनुभव साम्राज्यसुखं कृतार्थय मे बाल्यात् प्रभृति दुःस्थितस्य मनुजलोकावतरणम् ।

**वनिता**—अज्जउत्त, जं एस महप्पा विण्णवेदि तं पडिवद्यस्व[1] ।

**पुरुषः**—(निशम्य)

स्वमेकः पररक्षार्थं विनिहंति विपत्तिषु ।
स्वरक्षार्थं परं त्वन्यश्चित्रं चित्रा मनःस्थितिः ॥ ११ ॥

भवतु । महासत्व, मोचय मां तर्हि ।

(हरिश्चंद्रः सरोमांचं पुरुषं बंधनाद्विमुच्यात्मानं तथा बध्नाति)

**पुरुषः**—(पुरो भूत्वा प्रणम्य) महासत्व, प्राणदानवेतनेन क्रीतोऽहं भवता । ततः समयोचितं प्रार्थयस्व पताकिनं हस्तिनं वाजिनं कांचनं वा । न चैतावतात्मनि त्वया तिरस्कारः कोऽपि विचिंतनीयः ।

कमलानामुल्लासं करोतु तपनो निहंतु शीतांशुः ।
सत्यपि परतापहर्तुः शीतांशोरुज्ज्वलोऽभ्युदयः ॥ १२ ॥

नाप्येतावतैव मे गौरवम् ।

तेन कश्चन न गुरुर्लघुर्वापि न कश्चन ।
उचितानुचिताचारवश्ये गौरवलाघवे ॥ १३ ॥

**हरिश्चंद्रः**—कुमार, नाहं परतः किमप्यर्थये । एतत्पुनरभिलषामि सत्वरमपसरतु भवान् । अपरथा यदि सा खेचरी समायास्यति तदा भवतः किमप्यमंगलं विधास्यति ।

(नेपथ्ये)

मंजीराणि यथा रणंति बहलः कोलाहलः खेचरी-
चक्रस्यैष यथा यथा च वियति ज्योतिः समुज्जृंभते ।
दिव्यः कोऽपि निरर्गलः परिमलः प्रत्याशभासी यथा
गंगास्रोतसि सा निमज्ज्य खचरी जाने निवृत्ता तथा ॥ १४ ॥

---

१ आर्यपुत्र, यदेष महात्मा विज्ञापयति तत् प्रतिपद्यस्व.

**हरिश्चंद्रः**—(सभयम्) कुमार, सत्वरमपसर ।

(पुरुषः प्रणम्य वनितया सह निष्क्रांतः)

(ततः प्रविशति सद्यः स्नानार्द्रकेशपाशा चित्रांगदेन दत्तहस्तावलंबा विद्याधरी विभवतश्च परिवारः)

**विद्याधरी**—(चित्रांगदसमीपे भूत्वा) निरूपय उपहारलक्षणधरोऽयं पुरुषो न वा ।

**चित्रांगदः**—(विलोक्य) देवि, यदायमानीतस्तदा क्षत्रियमात्रलक्षणान्येवास्य वपुषि । सांप्रतं पुनश्चक्रवर्तिलक्षणानि ।

**विद्याधरी**—(सहर्षम्) सिद्धा तर्हि त्रिभुवनवशीकरणविद्या ।

**चित्रांगदः**—देवि, कियत्कृत्यो होमविधिः ।

**विद्याधरी**—प्रतिकुंडं मांसहोमेन त्रिर्होमविधिः ।

**चित्रांगदः**—होमसमाप्तौ किं भविष्यति ।

**विद्याधरी**—एवमाहुतीकृते पुरुषस्य मूर्ध्नि कुंडमध्याद् भगवती विश्वत्रयीवशीकारविद्या स्वयमाविर्भविष्यति ।

**हरिश्चंद्रः**—(सप्रमोदमात्मगतम्)

आनंदश्चतुरंबुराशिरसनादाम्ना धरित्र्या मुनेः
प्राणैः प्राणितमुन्नताच्छमनसो भूभृत्कुमारस्य च ।
सिद्धिर्विश्ववशंवदस्य खचरीमंत्रस्य मूर्ध्नाधुना
भाग्याभोगभवः परं मम भुवि श्लाघ्योऽवतारोत्सवः ॥ १५ ॥

**विद्याधरी**—हले पत्रलेखे, उपनय पूजोपकरणानि । येन कुंडमंडलोपहारपुरुषाणां पूजामारचयामि ।

(पत्रलेखा पूजापटलकहस्ता प्रविशति)

**पत्रलेखा**—देवि, ऍदं[1] पूजोवयरणं ।

**विद्याधरी**—(नाट्येन कुंडमंडलपूजां विधाय) चित्रांगद, मदाज्ञया समादिश विद्याधरवीरान् यथा भवद्भिः करालकरवालहस्तैरचकितमनोभिरष्टसु दिक्षु स्थित्वा कुंडमंडले निशाचरस्य मनुष्यस्य प्रवेशो रक्षणीयः ।

---

१ देवि, इदं पूजोपकरणम्.

(चित्रांगदस्तथा करोति)

**विद्याधरी**—(हरिश्चंद्रस्य पूजां विधाय करालं करवालं चादाय) अरे पुरुष, स्मर किमपि दैवतम् । एष इदानीं न भवसि ।

**हरिश्चंद्रः**—(शिरस्यंजलिं कृत्वा)

शीर्णनिःशेषसंसारव्यापारावेशवैशसम् ।
स्मरामि निष्ठितक्लेशं देवं नाभिसमुद्भवम् ॥ १६ ॥

**विद्याधरी**—साधु भो इष्टदैवतं नाभेयं स्मृतवानसि ।

**चित्रांगदः**—नाभेयनामावकीर्तने संप्रत्येव सिद्ध्यति भगवती विद्या ।

**विद्याधरी**—(पुनर्हरिश्चंद्रं प्रति) महाभाग, प्राणितमेकमपहाय समयोचितं कमप्यर्थय त्वम् ।

**हरिश्चंद्रः**—(साहंकारं) परमेश्वरि, जीवितमपि नाहं परतः प्रार्थये । किं पुनरपरं परम् । तदावेदय किं ते प्रयोजनमादधामि ।

**विद्याधरी**—स्वमांसखंडानि मे समर्पय ।

(हरिश्चंद्रः करवालमादाय स्वमांसखंडमर्पयति)

**विद्याधरी**—(गृहीत्वा) स्वर्गाधिपतये स्वाहा । (प्रथमकुंडे क्षिपति)

( हरिश्चंद्रः पुनर्मांसखंडमर्पयति )

**विद्याधरी**—मर्त्यलोकाधिपतये स्वाहा । (द्वितीयकुंडे क्षिपति)

**चित्रांगदः**—वर्धसे देवि, कनककंकणालंकारः करः प्रादुर्भूतो मध्यकुंडात् ।

(हरिश्चंद्रः पुनर्मांसखंडमर्पयति)

**विद्याधरी**—पातालाधिपतये स्वाहा । (तृतीयकुंडे क्षिपति)

**चित्रांगदः**—(ससंभ्रमम्) देवि, एष कः पर्याकुलो गोमायुर्भूयोभूयः शब्दायमानः परितः कुंडमंडलं परिभ्राम्यति ।

**विद्याधरी**—(सभयम्) भो भोः पुरुषाः, शिवाप्रवेशः प्रयत्नतो रक्षणीयः ।

(हरिश्चंद्रः पुनः पिशितमर्पयति । विद्याधरी तथैव प्रथमकुंडे क्षिपति)

(नेपथ्ये । भूयो गोमायुध्वनिः)

( हरिश्चंद्रः पुनः पिशितमर्पयति । विद्याधरी तथैव द्वितीयकुंडे क्षिपति )

**चित्रांगदः**—देवि, वर्धसे मणिकुंडलप्रभापिंजरितगंडमंडलं प्रादुर्भूतं मध्यमकुंडाद्वनितावदनकमलम् ।

(हरिश्चंद्रः पुनः पिशितमर्पयति)

(विद्याधरी तथैव सप्रमोदं तृतीयकुंडे क्षिपति)

(नेपथ्ये । पुनर्गोमायुध्वनिः)

**विद्याधरी**—(सभयम्) चित्रांगद, निवारय कथमप्येनं व्याहरन्तं करालं शृगालम् । यद्यस्य घोरैः फेत्कारैस्तापसो निद्रामपहास्यति तदा होमभंगमाधास्यति ।

(नेपथ्ये)

कः कालेन कटाक्षितः स्फुटरुषा दष्टः फणींद्रेण कः
स्फूर्जद्वह्निकणः करिष्यति शिरः कस्याशनिर्भस्मसात् ।
कंपां कल्यविशृंखले जलनिधौ को दातुमुत्कंठितो
वह्नावाश्रमसंनिधौ निशि महामांसं जुहोत्येष कः ॥ १७ ॥

**विद्याधरी**—(सोरस्ताडम्) हा हतास्मि । स्तोकसमाप्तस्य होमस्य प्रत्यूहस्तापसः समुत्थितः ।

**हरिश्चंद्रः**—परमेश्वरि, मा विषीद । गृहाण मे मूर्धानम् । पर्यंतकुंडे निक्षिप्य समापय होमम् ।

**विद्याधरी**—(प्रणम्य) सहासत्त्व, क्रमेण होमविधिर्न व्यतिक्रमेण । क्रमं च तापसो न क्षाम्यति ।

**चित्रांगदः**—(ससंभ्रमम्) देवि कुंडमंडले प्रविष्टस्तापसः । अधोनिमग्नं च विद्यामुखकमलम् ।

**विद्याधरी**—(साशंकम्) भग्नस्तर्हि होमविधिः । व्रजामः स्वस्थानम् ।

(इत्यभिधाय निष्क्रांताः)

(ततः प्रविशति क्रुद्धतापसः)

**तापसः**—(विलोक्य । प्रत्यभिज्ञाय च) कथमयमस्मद्गुरोरधमर्णः । (पुनर्हरिश्चंद्रं प्रति) अये हरिश्चंद्रो भवान् ।

**हरिश्चंद्रः**—हरिश्चंद्रोऽस्मि ।

**तापसः**—कौटिल्यमुपलक्षयसि माम् ।

**हरिश्चंद्रः**—कौटिल्यनामा मुनिर्यैः शक्रावताराश्रमवासिना कुलपतिना महीदानस्य साक्षीकृतः ।

**कौटिल्यः**—एवम् । दत्तं कुलपतये कनकम् ।

हरिश्चंद्रः—स्तोकमवशिष्यते ।

कौटिल्यः—जाने कनकभीरुणा त्वयायमात्मा घातयितुमुपक्रांतः । अये शालंकायन, व्रणरोहणौषधद्रव्येण लिंप दुरात्मानमेनमपरथा विपन्नेऽस्मिन् कुलपतेः कनकहानिर्भविष्यति ।

(प्रविश्य तापसो हरिश्चंद्रं प्रविमोच्यौषधेन लिंपति)

(नेपथ्ये) अले[1] कम्मकला मसाणं मिल्हिय कत्थ तुमं गउ ।

हरिश्चंद्रः—भगवन् निषादपतिर्मां आह्वयति ।

तापसः—व्रज तर्हि वयमप्याश्रमपदं व्रजामः ।

( इति निष्क्रान्ताः सर्वे )

पंचमोऽङ्कः समाप्तः ॥

१ अरे कर्मकर, श्मशानं मुक्त्वा कुत्र त्वं गतः.

# षष्ठोऽङ्कः ।

( ततः प्रविशति पिशाचः )

**पिशाचः**—[1]कुदो नाम देसंतरितोबंभनकम्मकरस्स मयस्स अनलसक्कारसंभवो तदा तं अदद्धं चेव भक्खंतस्स मे चिरा तित्ती भविस्सदि । (इति नृत्यति । विलोक्य) [2]को एस मसाणे समागच्छदि । भोतु नासइस्सं ।

(इति निष्क्रांतः)

(ततः प्रविशति हरिश्चंद्रः)

**हरिश्चंद्रः**—(सखेदम्)

अपरिभ्रष्टसत्त्वस्य नापूर्णं मम किंचन ।
खेचरीहोमभंगस्तु केवलं मां दुनोति सः ॥ १ ॥

(पुरो विलोक्य) तदिदं श्मशानं । यत्किल

किंचिद्दग्धकलेवरं परिपतद्गृध्रं चिताभीषणं
भ्राम्यद्भूतमभूतपल्लवतरुध्वांक्षध्वनिव्याकुलम् ।
ताराक्रंदमहृद्यगंधमतनुश्वानारवं विस्फुर-
द्धूमश्यामलमुच्छलद्रुरुशिवाफेत्कारघोरांतरम् ॥ २ ॥

(पुनः स्मृत्वा) अस्त्येषा किंवदंती पुरे यथा शतशो गवेक्ष्यमाणोऽपि चंद्रशेखरेण मांत्रिको नोपलब्धः । (पुनः सप्रमोदम्)

आत्मानं समिधं विधाय विलसज्वालाजटालेऽनले
कीरेणोपकृतं महद्दिनकृतो गोत्रस्य मे नान्यथा ।
देव्यां यद्यसमंजसं विरचयेद्वाराणसीभूपतिः
क्रुद्धः किंचन बालकः खलु तदा वत्सो विपद्येत सः ॥ ३ ॥

(नेपथ्ये) [3]एसे विवन्ने आगदे ।

**हरिश्चंद्रः**—किं वत्सो विपन्नः समागतः । प्रतिहतममंगलम् । विजयते भरतकुलम् । अखंडितप्रसरा संततिरिक्ष्वाकूणाम् ।

---

१ कुतो नाम देशांतरितब्राह्मणकर्मकरस्य मृतस्यानलसंस्कारसंभवः । तदा तमदग्धमेव भक्षयतो मे चिरं तृप्तिर्भविष्यति. २ क एष श्मशाने समागच्छति । भवतु नाशयिष्यामि. ३ एष विपन्न आगतः.

(कालदंडो दंडपाणिः प्रविशति)

**कालदंडः**—(सरोषम्) एसे विवन्ने समागए केवि । ता कीस तुमं निद्दायंते चिट्ठदि । तुलिदतुलिदं गच्छिय गिह्न वत्थं ।

**हरिश्चंद्रः**—(सभयं परिक्रम्य वामाक्षिस्पंदनमभिनीय च सावष्टंभम्)

लक्ष्मीं न स्पृहयालुरिंदुधवलामिच्छुर्न भोगोत्सवान्
श्रद्धालुर्जगदेकवल्लभतमे न प्राणितेऽप्यात्मनः ।
वत्सश्चेद्गुरतान्वयार्णवमणिः कल्याणशाली तदा
कामं वाममिदं स्फुरत्वविरतं नेत्रं च गात्रं च मे ॥ ४ ॥

(नेपथ्ये । सकरुणम्) वत्सो विवन्नो ।

**हरिश्चंद्रः**—(सविषादम्) किमिति पुनर्वत्सविपत्तिसंसूचकानामम-मंगलशब्दानां श्रुतिः । यदि वा स्थानमिदममंगलशब्दानां श्मशानम् । भवतु । परिक्रमामि तावत् ।

(प्रविशति पटांतर्पिहितवदना प्रलपंती वनिता । कौसुंभवसनाच्छादितश्च विपन्नो बालकः ।)

**वनिता**—वत्सो विवन्नो अउवरं किं मे जीविदेण । हा पुत्त, हा मुद्धमुह, हा सिरीसकुसुमसुकुमार, पुणोवि तुह वयणं मंदभायणी कहमहं पिक्खिस्सं ।

**हरिश्चंद्रः**—व्यक्तमस्याः सूनुरयम् ।

**वनिता**—पुत्तया तुमं एगो मे पुत्तो ।

**हरिश्चंद्रः**—(सकरुणम्) दुरात्मना कृतांतेन बालकममुं व्यापादयता ध्रुवमियमप्येकतनया व्यापादिता । (विमृश्य) बालकाच्छादनग्रहणमिदमतिनिर्घृणं कर्म कथमाधास्यामि । यदि वा

उचितमथानुचितमिदं चिंतयितुं युज्यते परं भर्तुः ।
कुलजानां पुनराज्ञाविधानचिंतैव भृत्यानाम् ॥ ५ ॥

**कालदंडः**—(सरोषम्) अले कम्मकला, कीसे विलंबेसि ।

---

१ एष विपन्नः समागतः कोऽपि । तत् कस्मात् त्वं निद्रायमाणस्तिष्ठसि । त्वरितत्वरितं गत्वा गृहाण वस्त्रं. २ वत्सो विपन्नः. ३ वत्सो विपन्नोऽतः परं किं मे जीवितेन । हा पुत्र मुग्धमुख, हा शिरीषकुसुमसुकुमार, पुनरपि तव वदनं मंदभागिनी कथमहं द्रक्ष्यामि. ४ पुत्रक, त्वमेको मे पुत्रः. ५ अरे कर्मकर, कस्माद्विलंबसे.

हरिश्चंद्रः—(सभयम्) स्वामिन्, कंटकेन मे क्षतश्चरणस्ततो विलंबः ।

वनिता—हा पुत्त भरदकुलपईव तरणिवंसावचूल चक्कवट्टि-लक्खणसमलंकिदसरीर, किं एदं समुपत्थिदं ।

हरिश्चंद्रः—(प्रत्यभिज्ञाय) कथमियं देवी सुतारा । अयं च विपन्नो वत्सो मे रोहिताश्वश्च ।

साम्राज्यापगमो विदेशगमनं पुत्रप्रियाविक्रयो
 व्रीडाकारि कठोरघोरमनसो दास्यं निषादस्य च ।
एतैस्तैरसमाप्तकौतुकविधिर्वेधाः पुनश्चोत्सवै-
 र्वत्सस्य स्तनपानकोमलदृशः पंचत्वमानीतवान् ॥ ६ ॥

वनिता—हा निग्घिण वज्जहियय, कीस तए मारणत्थं कुसुमाहरणं मि एस मह तणउ पेसिउ ।

हरिश्चंद्रः—(सदुःखम्)

घनप्रवासे रिपुदेशवासे
 परस्य दास्ये च विधीयमाने ।
अनन्यबंधोस्तनयस्य मृत्युः
 सेयं परा काचन दुःखकाष्ठा ॥ ७ ॥

(विमृश्य सावष्टंभम्)

हरिश्चंद्रोऽहमखिलाः सहिष्ये विपदः खलु ।
एकापत्या पुनर्देवी व्यक्तमेषा विपत्स्यते ॥ ८ ॥

कालदंडः—अले, कीसे विलंबसे ।

हरिश्चंद्रः—(सभयमुपसृत्य सबाष्पकंठम्) देवि निर्भाग्यशेखरे, किमिदम् ।

(वनिता तारस्वरं रोदिति)

हरिश्चंद्रः—(सबाष्पम्) देवि, कोऽयं भरतकुलस्य वज्रनिपातः ।

---

१ हा पुत्र भरतकुलपते तरणिवंशावचूड चक्रवर्तिलक्षणसमलंकृतशरीर, किमिदं समुपस्थितम्. २ हा निर्घृण वज्रहृदय, कस्मात् त्वया मारणार्थं कुसुमाहरणायैष मम तनयः प्रेषितः ३ अरे, कस्माद्विलंबसे.

**वनिता**—(विलोक्य तारस्वरं रुदंती) अज्जउत्त[1], पिच्छ णिक्करुणेन दिव्वेन कीदिसं किदं । एस अज्जउ पभायसमयंमि दब्भसमिदाहरणत्थं गउ पुत्तो रोहितासो भुयंगमेण दट्ठो ।

**हरिश्चंद्रः**—(रोहिताश्वस्य वदनमुद्घाट्य) वत्स, भुजंगमस्त्वां दष्टवान् । (सास्रम्) राजतात मृगांकवदन सरोजनयन नयमंडन भरतकुलनंदन, त्वरितमुत्थाय परिरभस्व माम् । (पुनर्मुखमाघ्राय) देव, किं नामात्मपितरं नोपलक्षयसि । (पुनर्विचिंत्य) कथं चिरादृष्टं मां वत्सो नोपलक्षयति । देवि, वत्सो मां नालपति नाप्यालिंगति ।

**वनिता**—मूढहियय[2], किं मं पुच्छसि । दिव्वं पुच्छ ।

**हरिश्चंद्रः**—(चेतनामास्थाय सलज्जम्) नन्वयं विपन्नो वत्सः कथं मामालपति श्लिष्यति च । तदहमतः परं वृथा प्राणिमि वत्सेनैव सह चितामारोहामि । यदि वा धिङ् मे चिंतितं निषादाधीनस्य मे चिताधिरोहणं कीदृशमौचित्यमावहति ।

**कालदंडः**—(सरोषम्) अले[3] कम्मकला, एदाए इत्थियाए सह सु अणत्तणं किं पि तए पालद्धं । जं एवं विलंबसे ।

**हरिश्चंद्रः**—(विमृश्य) अतिनिर्दयमिदम् । यदहं मृतस्य सुतस्य वसनमपहरामि । तदलममुना तरणिकुलकलंकेन कर्मणा । निषादपतिः सुकुप्यतु व्यापादयतु वा माम् । (कतिचित्पदानि गत्वा प्रतिनिवृत्य सपश्चात्तापम्) कोऽयं मे पूर्वापरहतः संकल्पः । यतः

अयं कलंको यदहं मृतस्य
पुत्रस्य वस्त्रं किल संहरामि ।
सत्यव्रतं यत्तु निजं त्यजामि
भानोः कुलेऽसौ न पुनः कलंकः ॥ ९ ॥

(विमृश्य सावष्टंभम्)

इक्ष्वाकुः खलु सोऽहमेकसदनं शौर्यस्य धैर्यस्य च
व्यापत्तिः प्रतिवासरं प्रतिदिशं कामं समुज्जृंभिता ।

---

१ आर्यपुत्र, पश्य निष्करुणेन दैवेन कीदृशं कृतम् । एषोऽद्य प्रभातसमये दर्भसमिदाहरणार्थं गतः पुत्रः रोहिताश्वो भुजंगमेन दष्टः. २ मूढहृदय, किं मां पृच्छसि । दैवं पृच्छ. ३ अरे कर्मकर, एतया स्त्रिया सह सुजनत्वं किमपि त्वयाप्रारब्धम् । यदेवं विलंबसे.

व्यापन्नस्य सुतस्य निश्चितमिदं गृह्णामि वस्त्रं ननु
स्वां संधां यदि नादधामि भगवान् भानुस्तदा लज्जते ॥१०॥

**कालदंडः**—(साक्षेपम्) अले, कीस तुमंवलिदे ।

**हरिश्चंद्रः**—एष बालक इति प्रष्टुम् ।

**कालदंडः**—एसे जेइ बालगे तदा किं मे । गिण्ह गडुय वत्थं ।

**हरिश्चंद्रः**—(परिक्रम्य सगद्गदस्वरम्) देवि ।

**वनिता**—अज्जउत्त ।

**हरिश्चंद्रः**—देवि ।

**वनिता**—अज्जउत्त, आदिश किं करेमि ।

(हरिश्चंद्रः सबाष्पं ग्रीवां वक्रीकृत्यान्यतो विलोकयन् प्रसारितकरद्वयसंज्ञया कुसुंभवसनं याचते)

**वनिता**—(अनवबुध्य) अज्जउत्त, किं भणसि ।

(हरिश्चंद्रः पुनस्तदेव कुरुते)

**वनिता**—(रुदंती) अज्जउत्त, पुत्तयं ते हत्थे देमि । (रोहिताश्वमुत्क्षिपति)

**हरिश्चंद्रः**—(बाष्पोपरोधस्खलितस्वरम्) देवि, तिष्ठतु वत्सो वत्साच्छादनवस्त्रं समर्पय ।

(कुसुमवृष्टिनिपातानंतरमाकाशे)

अहो दानमहो धैर्यमहो वीर्यमखंडितम् ।
उदारधीरवीराणां हरिश्चंद्रो निदर्शनम् ॥ ११ ॥

(ततः प्रविशतश्चंद्रचूडकुंदप्रभामिधानौ गगनादवतरणं नाटयंतौ देवौ)

**हरिश्चंद्रः**—(विलोक्य ससंभ्रमम्) किमिदम् ।

(देवौ प्रणम्योपविशतः)

**हरिश्चंद्रः**—(स्वगतम्)

स्वप्नं किं नु मनोभ्रमः किमथ किं नेत्रस्य मे विप्लवः
किंवाकांडरुषो विजृंभितमिदं देवस्य दैत्यस्य वा ।
कोऽहं स्थानमिदं च किं शिशुरयं को वाथ केयं वधूः
सद्दिव्याभरणांशुपीततमसावेतौ पुमांसौ च कौ ॥ १२ ॥

---

१ अरे, कस्मात्त्वं वलितः. २ एष यदा बालकस्तदा किं मे । गृहाण गत्वा वस्त्रम्. ३ आर्यपुत्र. ४ आर्यपुत्र, आदिश किं करोमि. ५ आर्यपुत्र, किं भणसि. ६ आर्यपुत्र, पुत्रकं तव हस्ते यच्छामि.

(विलोक्य) किमिदं सर्वमप्यपरं प्रतिभासते ।

चंद्रचूडः—महासत्त्वचूडामणे, कृतममुना विस्मयेन । अस्मत्कृतेयं कूटनाटकघटना ।

आखेटा मुनिकन्यका कुलपतिः कीरः शृगालोऽध्वगा
विप्रो म्लेच्छपतिर्मनुष्यमरणं लंबस्तनी मांत्रिकः ।
उद्बद्धः पुरुषो वियच्चरवधूर्गोमायुनादः फणी
सर्वं सत्त्वपरिक्षणैकरसिकैरस्माभिरेतत्कृतम् ॥ १३ ॥

(हरिश्चंद्रः सव्रीडमधोमुखस्तिष्ठति)

कुंदप्रभः—महासत्वावतंस

सीमानं न विलंघयंति पतयो यत्पाथसां दिग्गजाः
क्ष्मापीठं दधते कुलक्षितिभृतः शेषश्च कूर्मश्च यत् ।
विश्वस्यास्य विलोचने तिरयतो यत्पुष्पवंतौ तम-
स्तस्मिन् मध्यमलोकपाल भवतः सत्त्वं परं कारणम् ॥१४॥

चंद्रचूडः—

त्वं पुण्यः सुकृती त्वमेव भवतः श्लाघ्योऽवतारः क्षितौ
शृंगारस्तव सात्त्विकेषु जननी ते वीर वीरप्रसूः ।
रोमांचाङ्कुरपक्ष्मलः प्रतिमुहुर्बाष्पोर्मिमूर्च्छालवाक्
सत्त्वं यस्य तवान्वहं स्पृहयति श्रीमान् स्वयं स्वःपतिः ॥१५॥

हरिश्चंद्रः—भगवान्, मघवानस्मादृशां मनुजकीटानां सत्त्वाय स्पृहयतीति महच्चित्रम् ।

चंद्रचूडः—महासत्त्व, स्मरति भवान् यदेकदा शक्रावतारनिवासिनो भगवतः श्रीनाभिनंदनस्य जिनस्य सपर्याविधानार्थमागतवते सत्त्वपरीक्षणोत्सुकाय मघवते स्वमूर्धानमुपनेतुमुपस्थितवानसि ।

हरिश्चंद्रः—स्मरामि ।

चंद्रचूडः—ततः प्रभृति परमेश्वरो जंभारिर्भवत्सत्त्वोत्कर्षविस्मितमनाः सततमास्ते ।

कुंदप्रभः—

सत्त्वेषु सात्त्विकशिरोमणिषु प्रधानं
त्रैशंकवात् क्षितिपतेरपरो न कश्चित् ।

श्लाघां पुरंदरकृतां निशमय्य सर्वे
बद्धक्रुधो वयमिदं विदधामहे स्म ॥ १६ ॥

चंद्रचूडः—

उपकर्तुं परमेके महते स्पृहयंति विभवभाराय ।
अपकर्तुं पुनरपरैः पश्यत लोकस्य वैचित्र्यम् ॥ १७ ॥

महाभाग, भवादृशां विश्वत्रयानंदकंदकंदलनपयोदानां मनुजलोकावतरणं परोपकाराय । अस्मादृशां त्रिलोकीलोकसंतापावापदीक्षादुर्ललितचेतसां दुर्मेधसां स्वर्गसंसर्गः पुनः परापकाराय ।

हरिश्चंद्रः—दिव्यप्रभावप्रस्तुतं दर्पसर्पमसंस्पृशंतः स्वैरमादिशत यूयम् । अहं पुनस्तत्रभवतो भवतः परोपकारिणः कलयामि । कथमपरश्चातुच्छप्रभावदृशामस्मादृशां प्रभूतक्लेशावेशः सोऽयमवलेपः प्रथताम् ।

चंद्रचूडः—(सव्रीडम्) एतस्यात्मक्लेशावेशस्यानुसारेण स्वैरमुपश्लोकयास्मान् ।

हरिश्चंद्रः—वसुभूतिः कुंतलश्च कथं वर्तेते ।

चंद्रचूडः—स वसुभूतिर्यः शुकरूपेण चितामधिरूढवान् । स च कुंतलो यो गोमायुनादैः कौटिल्यमुपस्थितवान् । द्वावप्येतौ अयोध्यां गतौ महाराजो द्रक्ष्यति ।

कुंदप्रभः—

क्लेशावेशमिमं क्षमस्व भवतः सत्यस्य सत्त्वस्य वा
मीमांसासु रजस्तमः कृतदृशः के नाम तेऽस्मादृशः ।
दुष्प्रापापरितोषपोषविकसद्रोमांकुराः स्वर्गिणः
स्वैरं सात्त्विकचंद्र संदिश ततः किं ते प्रियं कुर्महे ॥१८॥

हरिश्चंद्रः—

अखंडं स्वं सत्त्वं परिनिकषमारोप्य हठतः
परां ख्यातिं नीतो ननु जगति वंशो दिनकृतः ।
कुतः सत्याभाषी स खलु पुरुहूतश्च भगवान्
भवेद्भूयो ब्रूत प्रियतरमतः किं किल समम् ॥ १९ ॥

कुंदप्रभः—तथापि किमपि प्रार्थयस्व ।

हरिश्चंद्रः—नाहं प्रलयेऽपि परप्रणयदैन्यमावहामि ।

चंद्रचूडः—

परप्रणयदैन्यतः कृतविरामचंद्रोज्ज्वला-
मवाप्य निजसंपदं पदमचिंत्यशर्मश्रियः ।
यशोभिरनिशं दिशः कुसुमहासभासः सृज-
न्नजातगणनाः समाः परमतः स्वतंत्रो भव ॥ २० ॥

(इति निष्क्रांताः सर्वे)

षष्ठोऽङ्कः संपूर्णः ॥

सत्यहरिश्चन्द्रनाटकम् । कृतिरियं प्रबंधशतकर्तुर्महाकवे रामचंद्रस्य ।

॥ शुभं भवतु ॥

